# संगमनी

Sanskrit Quarterly

संस्कृत-त्रैमासिकी

नवमवर्षे प्रथमद्वितीयाऽङ्कौ-

संवत् २०३०-३१

९ वर्षे ( VOL. IX ) ( NO. 1-2, ) १-२, अङ्कौ

सम्पादकः

प्रभात शास्त्री

सहसम्पादकौ

तारिणीश झाः डॉ० रुद्रदेव त्रिपाठी

प्रयागस्थ-संस्कृत-साहित्य-परिषदः प्रकाशनम्

कार्यालयः
संगमनी
दारागंज—प्रयाग।

वार्षिकं मूल्यम्
रु० ६ ००
प्रत्यङ्कम् रु०१-५०

लक्ष्यं योजना च

- इयं संगमनी संस्कृतस्य निःस्वार्थसेवाया नामान्तरम् ।
- अस्यां संस्कृतवाङ्मयविषये गवेषणापूर्णलेखानां परिचर्चायाश्च प्रकाशनम् ।
- संस्कृतभाषाया अप्रकाशितपाण्डुलिपेश्च प्रकाशनं भवति ।
- अनया संस्कृतवाङ्मयस्य संस्कृतभाषायाश्च प्रचाराय प्रसाराय च प्रयत्यते ।

FIRST PUBLISHED IN BOOK FORM

# CHIMANI-CHARITAM

**[ Romantic-Poem ]**

BY

KAVI SHRI NEELAKANTHA SHUKLA

Edited By

**Prabhat Shastri**

पुस्तकरूपेण प्रथमप्रकाशनम्

# चिमनीचरितम्

[ प्रेमकाव्यम् ]

रचयिता

कविश्रीनीलकण्ठशुक्लः



सम्पादक :

प्रभातशास्त्री

● प्रकाशकः

देवभाषाप्रकाशनम्
दारागंज — प्रयागः

● प्रथमसंस्करणम्

संवत् : २०३३ वि०
मूल्यम् : ८.००

● मुद्रकः :

देववाणीमुद्रणालयः
दारागंज–प्रयागः

•

रिक्तीकृते निजतया भवभूतिमुख्यै-
र्भिक्षाटनं कृतवतः पुनरुञ्छवृत्या ।
क्षेत्रे यदत्र खननेन ममार्थलाभो,
थः कोऽप्यभूदिह महेशकृपैव हेतुः ॥

•

रस एव स ईश्वरः श्रुता-
विति निर्णीतमतोऽभिधीयते ।
चिमनीचरिते रसाश्रयं,
वचनं चेन्न मम श्रमोऽश्रमः ॥

•

# । चिमनीचरित्रम् ।

●

आसीदाशीर्वचनविषयः पश्यतामाननाब्जं,
सौन्दर्यान्तःकरणमवनीकौतुकं काव्यतत्त्वम् ।
स्फूर्तेर्मूर्तिर्मदनमहिमा भारतीभागधेयं,
क्रीडास्थानं रसिकमनसां श्रीदयादेवशर्मा ॥१

●

चेतोवृन्दान्यलहविरदीखानसीमन्तिनीनां,
यस्मिन्नग्नौ शलभकुलवद्भेजिरे झम्पपातान् ।
बिभ्राणो यः किमपि ललितं लोचनालेह्यमोजः,
स्त्रीणामासीदवनिवलये मोहनो मोहिनीनाम् ॥२

सोऽयं दैवादलहविरदीखाननामानमेत्य,
म्लेच्छाधीशं प्रकटितगुणः स्वीचकारास्य वृत्तिम् ।
तत्राप्येष स्मरसहचरे वर्तमानो वयस्य-
प्युद्युक्तोऽन्तःपुरमृगदृशां पाठनस्याधिकारे ॥३



क्वाऽसौ विप्रः क्व च परिचयोऽन्तःपुरस्त्रीषु योऽयं,
नीरूपाणां गलितवयसां युक्त उक्तोऽभियुक्तैः ।
इत्यज्ञानादपरिगणयन् म्लेच्छराजोऽन्वजाना-
देतत्पार्श्वे पठितुमनिशं मानिकाद्या नताङ्गीः ॥४



तादृक् तासां रहसि मिलनं तादृशी रूपसंपत्,
तादृग्वेषो विलसितमहो !! यौवनस्याऽपि तादृक् ।
तादृग्विप्रो गुरुरयमथाध्यापनं तादृशं चे-
त्येषां किंस्वित् कुसुमधनुषः कार्यसिद्धिं न कुर्यात् ?॥५



एतेनासां रहसि मिलनं किञ्चिदन्यादृशं भू-
न्माऽस्मिन् कृत्येऽस्यधिकृत इति त्वं भवेः सावधानः ।
आभाष्यैवं यवनपतिनाऽनीशनामा नियुक्तः,
क्लीबस्तासां पठनसमये पार्श्वे आसां बभूव ॥६

पाणिस्पर्शो लिखनसमये तेन किं वारणीयो,
वर्णोच्चारे वदनकमलाऽऽलोकनं किं निवार्यम् ।
किं वा काव्यादभिमतविधेर्बोधनं शोधनीयं,
कृत्येऽनीशः समजनि निजे सर्वतोऽनीश एव ॥७

•

काचित् कम्पं वपुषि दधती सीत्कृतिं चाऽधरोष्ठे,
हृष्यद्रोमण्यपि करतलं गोचरे ताडनस्य ।
वर्णोच्चारे विसदृशि कृते कातराक्षी विनेतु-
र्न व्यातेने किमिव कुतुकं यष्टिकोन्नामनेषु ॥८

•

भूयो भूयः प्रियतमकरस्पर्शनाऽऽनन्दलाभं,
काङ्क्षन्ती काप्यलिखदयथावल्लिपि कैतवेन ।
ज्ञातेऽथास्याः कपटलिखने तस्य पाणावकस्मा-
ज्जातः कम्पोऽजनयत पुनर्लेखनेऽप्यन्यथात्वम् ॥९

•

यष्टिर्यावद्व्यरचि गुरुणा नोन्नता सन्नताज्ञ्या-
स्तावत्कामः समुदनमयद्भ्रूलताचापयष्टिम् ।
किञ्चाऽस्राम्भः कणविलुलितैः कातरैरक्षिपातै-
र्बाणिव्रातैरयमतनुना ताडितः प्रत्युताऽहो !! ॥१०

किंस्विन्नव्ये वयसि गुरुतामागतस्यास्य कुर्युः,
कार्ये नानाविलसितमये मीनकेतोर्नियोगम् ।
किं वा नीलोत्पलदलदृशो वेपमानाग्रहस्ताः,
शिक्षां तस्याक्षरपरिचये मानयेयुर्विनेतुः ॥ ११



क्वत्या शक्तिः सरसिजदृशां पाठने तस्य तिष्ठेत्,
तिष्ठेयुर्वा कथमवहितास्तास्तदीये नियोगे ।
लग्नैरन्तर्मनसमनिशं यस्य यासां विलासै-
र्हा ! धिक् कष्टं पठनमखिलं स्वीयमेव प्रणष्टम् ॥ १२



तेनैतासामसति पठने किं नु शिक्षा विधेया,
किं वा केनाऽप्यहह ! गुरुणा तस्य शिक्षा विधेया ।
योऽसौ यासां रहसि चरितैस्तादृशैस्तामवस्थां,
नीतो यस्यां यवननृपतेरप्यभून्निर्भयोऽयम् ॥ १३



भाषाकाव्यं यवनयुवतीः पाठयामास विप्र-
स्तस्यार्थं तु स्वयमभिनयैर्व्यञ्जयामासुरेताः ।
तासां ज्ञानं किमपि गुरुतः काव्यजातस्य जातं,
विज्ञानं तु स्मरसहचराद्यौवनात् प्रादुरासीत् ॥ १४

तासां तादृक् प्रणयिनि मनो मग्नमासीद्यथैता,
अन्योन्येर्ष्यामलिनमनसो नो मनागप्यभूवन् ।
जीवन्मुक्ता इव किमपि या नात्मवृत्तं व्यजानन्-
न्नेतासां वा कथमवगतं स्यात् सपत्नीचरित्रम् ॥१५



आस्यैरासामहनि मुमुदे किं च मम्ले निशायां,
नैतच्चित्रं स हि जलरुहां जातिसिद्धः स्वभावः ।
चित्रं तत् तु स्फुरति दिवसे मित्रमालोक्य नेत्रा-
ण्युत्फुल्लानि, व्यवहृतिरियं नैव नीलोत्पलानाम् ॥१६



ताभिस्तेनाप्यसति मिलनेऽनेकयामा त्रियामा,
कोकद्वन्द्वैरिव न कथमप्यन्तमानीयते स्म ।
किं चोदञ्चद्बहुविधसुखे सङ्गमे वासरोऽपि,
द्रागेवैकः क्षण इव गतः कुत्र न ज्ञायते स्म ॥१७



मासं नक्ताशननियमिनां मासि तस्मिन्नराणां,
प्राजापत्यं दिनमिव दिनं दीर्घमासीद्यदेव ।
पश्यन्तीनां प्रियतममुखं साभिलाषं निमेषा-
देकस्मादप्यहह ! तनुतामेतदेव प्रपेदे ॥१८

नानध्यायादधिकमपरं वासरं सौख्यहेतुः,
शिष्याणां स्यादिह यदभियः खेलनं ते भजन्ते।
आसीत् प्रेयोविरहहुतभुग्ज्वालजालावृताना-
मेतासां तु प्रलयदिवसो नापरः कोऽपि तस्मात् १६

•

दातुं वीटीं पुर इव कृतो यावदेवाग्रहस्त-
स्तावत् पश्चादहह ! विरहाशङ्कयाऽऽकृष्यते स्म।
हा ! धिग्याते़ऽप्यहनि गुरुणा प्रार्थ्यमाने विदाये,
तन्व्या वीटीवितरणविधिर्नाध्यगच्छत् समाप्तिम् ॥२०

•

तापस्ताद्दग्वपुषि विपुलः प्रादुरासीदकस्मा-
दुद्वेलत्वं पुनरुपययौ चक्षुषोर्बाष्पपूरः।
किं च श्वासोऽप्यजनि कुचयोः कम्पहेतुर्वधूनां,
वीटीदानावसर उदभूत् कोऽपि कल्पान्तकल्पः ॥२१

•

काचिन्मूर्च्छाऽपगमसमये व्योमनीन्दुं निरीक्ष्य,
प्रोवाचेति प्रियसखि ! कुतः प्रातरेव प्रबोध्य।
नीता नाहं दयितसविधे धिग्दिनार्धं प्रयातं,
दिष्ट्या दृष्ट्या पुनरपि पुरो दृश्यते पश्य भानुः ॥२२

कोकः कोकीमिव कविवरस्त्वामसावेत्य सद्यः,
प्रातःकाले पुनरपि समाश्वासयिष्यत्यवश्यम् ।
सख्येत्युक्ते वचसि सहसोत्थाय जाताभिलाषं,
तन्व्या दृष्टिर्दिशि सुरपतेः प्रेषिताऽनेकवारम् ॥२३

•

कोकस्त्रीणां दयितविरहः केवलं दुःखहेतुः,
सोढव्यस्ताः कथमिव समा मादृशीभिर्भवेयुः ।
हा !! धिग्यासां यवनपतिना संप्रयोगो निशायां,
सोढव्योऽयं प्रियसखि ! पुनर्विप्रयोगः प्रियेण ॥२४

•

नानध्याये यदि परिणमेदन्यथात्वं दिनाना,
दध्युः सर्वाण्यपि ननु तदैतानि हैमन्तिकत्वम् ।
आयामिन्यो यदि च नितरां नो रजन्यो भवेयुः,
संबन्धिन्यः सहचरि ! तदैता अपि स्युस्तपर्तोः ॥२५

•

रात्रौ रात्रावुदयमयतेऽस्मासु तापं वितन्वन्,
मूर्खः ख्यातं त्रिजगति निजं यः कलङ्कं करोति ।
आविष्कुर्वन् कतिपयकलाः शुक्लपक्षाऽश्रयेणा–
सावप्येको द्विजपतिरभूत् पश्यताभाग्ययोगम् ॥२६

यासां जन्मप्रभृति मिलनं जायमानं जलौघै-
स्ताभिः प्राप्यः प्रियसखि ! पुनः कुत्र चातुर्ययोगः ।
पश्येदानीमहह !! शशिनस्ताप्यमाना मयूखै--
रालोक्यास्मान् प्रहसितमुखाः कैरविण्यो भवन्ति ॥२७

●

संवर्ताग्निः सितरुचिरसावस्य ताराः स्फुलिङ्गा,
धूमव्यूहो गगनमभितो दिग्विभागान् प्रसर्पन् ।
ज्योत्स्ना ज्वालापटलमनिलो विप्रयोगः सहायो,
हा !! धिग्दाह्यास्तृणमिव वयं निर्दयं देवर्माद्दक ॥२८

●

सोढव्योऽयं दयितविरहः सोऽपि चैत्रक्षपायां,
साऽपि ज्योत्स्ना, रजनिपतिना साऽपि पूर्णेन युक्ता ।
क्रोधेनेद्धः प्रियसखि ! पुनः सोऽपि सोऽप्यस्मदीय--
प्रेयः श्रीमन्मुखविहितयाऽवज्ञया जायमानः ॥२९

●

केनापीन्दोर्हृदयमदयं हन्त !! निष्कृष्य नीतं,
तस्मादेव स्फुरति गगनं मध्यभागेऽस्य रिक्तं ।
यच्चैतस्मिन् हृदयरहिते नास्ति कारुण्यमीषत्,
तेनैवेन्दुर्व्यथयतितरां मादृशीः क्रूरकर्मा ॥३०

एकस्तावत् तव न गणितश्चेत् कलङ्कस्ततः किं,
धन्यंमन्यः पुनरपि वधे मादृशीनां प्रवृत्तः।
मा ते गर्वो द्विजपतिरितिच्छिद्रजातैः प्रजातै-
र्नो जानीषे तितउतुलनां प्राप्स्यसि त्वं क्षणेन ॥३१



इन्दोरुस्त्रैर्बहिरिव शरैः शम्बरारेर्यदन्त-
स्तप्तं तस्मिन् मम हृदि कथं स्थाप्यतां प्राणनाथः।
मन्ये धन्यान्यहह !! कमलान्यन्तराधाय भृङ्गं,
यान्येतस्मिन् प्रलयसमये छादयन्तिच्छदैः स्वैः ॥३२



धृत्वा धैर्यं प्रियसखि ! समाधेहि चेतः समाधौ,
ध्यायं ध्यायं तदनु दयितं यापयेथास्त्रियामाम्।
प्राणत्राणं प्रलयसमये कर्तुमभ्युद्यतानां,
योगीन्द्राणामपि हि परमोपाय एकः समाधिः।'३३



रुन्धे विन्ध्यः पुनरपि गतो वृद्धिमेतस्य मार्गं,
दौर्भाग्यं मे सखि! किमथवा विन्ध्यवद्वर्धमानम्।
नोचेदेवं दिनपतिरयं सुप्रभातं वितन्वन्,
नाद्याप्यस्मन्नयनविषयं हन्त ! कस्मादुपैति ॥३४

वर्णे गौरं वचसि मधुरं शोणमोष्ठे मुखन्दो,
मन्दस्मेरं पृथु नयनयोरुन्नतं नासिकायाम् ।
दीर्घं दोष्णोरुरसि विपुलं मासलं चांसदेशे,
पश्येमाग्रे पुनरपि दृशां भागधेयं प्रभाते ॥३५



रात्रिर्याता कथय कियती तन्वि ! पृच्छावशिष्टां,
रात्रि हा ! धिक् कथयसि पुरः पश्य जातं प्रभातम् ।
आश्वास्येऽहं प्रियसखि ! मुधा सत्यमाश्वास्यसे त्वं,
तेनैवाद्य द्रुततरमुपागत्य पार्श्वस्थितेन ॥३६



तन्वीं रक्तामनुकरतलं वेत्रयष्टिं दधानः,
स्वान्ते च त्वां दशनवसने किं च ताम्बूललेखाम् ।
धृत्वा धैर्यं गमय रजनीमल्पमेवावशिष्टां,
प्रादुःष्यान्नौ पुनरपि दृशामुत्सवः प्रातरेव ॥३७



मातर्मूर्च्छे ! पुनरपि कृपां भावय त्वं जनेऽस्मि--
न्नालम्ब्य त्वां गमयतु निशाशेषमेष क्षणेन ।
नो चेत् प्राप्यं कथमपि मया नावसानं निशायाः,
किन्तु प्राप्यं सपदि निशयैवावसानं मदीयम् ॥३८

लग्नं चेतो यदवधि दयादेव एवास्मदीयं,
लग्नाश्चैतस्यपि मम तदारभ्य तस्यैव धर्माः।
आविष्कुर्वन् रजनिविरतिं म्लेच्छधर्मेष्वशेषे-
ष्वेष प्रीतिं मम वितनुते केवलं बाँगशब्दः ॥३९



तारैस्तारैरहमिव रुतैस्त्रातुमेतां निशायां,
शक्तो यः स्यात् त्रिभुवनतले तेन मे मोचनीया।
चूडेत्येवं मनसि नितरां जायमानाभिमानो,
मौलौ चूडां तत इव निजे ताम्रचूडो बबन्ध ॥४०



कान्तस्यान्तर्दशनवसनं शोभमानेन साधं,
शोणिम्नायं कमपि कलये बंधुभावं बिभर्ति।
नोचेदेवं दिशि सुरपतेः शोणिमानं तमेनं,
दर्शं दर्शं कथमिव दृशौ निर्वृतिं विन्दतो मे ॥४१



प्राची रक्ता सुखयति सखीव प्रियावेदिका मां,
द्रष्टुं भानुं प्रियतममिवोत्कण्ठतेऽतीव चेतः।
विश्लेषाग्नेरिव सितरुचेर्ज्वालजालैः प्रशान्तं,
क्षीणाः स्मारा इव परिभवाः किं च तारा अपाराः ॥४२

काकाः काकारवमवत नः श्रावयित्वाऽधुनास्मा-
नस्माभिर्वो बलिवितरणान्येतदर्थं क्रियन्ते ।
पूर्वं प्रेयोमिलनदिनतोऽस्माकमेते हि धर्मा,
जन्मारभ्य श्रवणपदवीमप्यहो ! न प्रयाताः ॥४३



माकन्दीयाङ्कुरकवलनं कुर्वतां कोकिलानां,
लोकः कामं कलयतु कलैः कूजितैः कौतुकं तैः ।
कुर्वन्नन्तःकरणकलनाः कर्णयोः कल्यशंसी,
काकीयो नः कलकलरवः कौतुकान्यातनोति ॥४४



का का जीवत्यतनुविशिखैर्हन्त !! का का न विद्धा,
का कोत्तीर्णा विषमसमयं ध्यानयुग्योगिनीव ।
एतान् प्रश्नान् प्रकटितकृपोऽस्मासु नूनं चिकीर्षुः,
काकेत्येतद्वदति पुरतो व्यक्तमास्येन काकः ॥४५



कालाधीना स्फुरति विविधा वस्तुशक्तिस्तथाहि-
प्रादुर्भूतो दिवसविलये दुःखहेतुर्य एव ।
कर्तुं पूर्णां प्रियसखि ! मनःकामनां कल्पते नः,
कल्योत्पन्नः किल कलकलः कालविङ्कः स एव ॥४६

आविष्कुर्वन्नुदयशिखरेऽवस्थितं भानुमन्तं,
प्राणप्रेष्ठं प्रियसखि ! निजादालयात् प्रस्थितं च ।
आनन्दं मे वितरति तथा तूर्यनादो यथाऽसौ-
च्छब्दो ब्रह्मेत्यभिमतमिदं शाब्दिकानां मतं मे ॥४७



इत्येतासां दयितविरहव्याकुलायां दशायां,
वाचस्तापातिशयपिशुनाः प्रादुरासन्निशायाम् ।
प्रातःकृत्यं त्वरितमथ ताः संविधायाध्यगच्छ-
न्नध्यायस्यालयमधिगतं पूर्वमेव प्रियेण ॥४८



पायं पायं प्रियतममुखं ताः सुखं तादृगापु-
स्तासां येन ध्रुवमनुभवेऽप्याविरासीत् प्रमोहः ।
किं चैतस्मिन्नखिलकरणान्यर्पयन्ति स्म पूर्वं
पश्चादेताः किल करतले तस्य ताम्बूलवीटीः ॥४९



यादृग्दुःखं निशि मृगदृशः प्रेयसो विप्रयोगे
तादृक् तेनाहनि मिलनतः सौख्यमप्यन्वभूवन् ।
किं ताश्चेतोजनुरुपनिषत्तत्त्वबोधादवाप्ता,
जीवन्मुक्तिं तदिति विदधुर्दुःखसौख्ये समाने ॥५०

यासावासीदलहविरदीज्येष्ठबन्धोस्तनूजा,
भार्यात्वं चाप्यलहविरदीज्येष्ठसूनोरयासीत् ।
याता ख्याति जगति चिमनीत्याख्यया या गवाक्षे,
दैवादेशात् क्वचिदथ दयादेवमेषा ददर्श ॥५१

•

दर्शं दर्शं द्विजवरमुखं सा सुखं प्राप तादृग्,
नूनं यादृक् त्रिदशसुदृशां दुर्लभं नन्दनेऽपि ।
किं चैतासां कथमपि तया नो तुला स्यात् तदीये,
चेन्नस्यातामहह !! नयने निर्निमेषे तदानीम् ॥५२

•

चेतश्चेतोभवपरिभवं देहदीप्त्या दधाने,
तस्मिन् विस्मापितदृशि समाधाय तस्मादवाप ।
द्वेषं पत्यौ विषमविशिखेऽधीनतां पीनतां च,
श्वासोल्लासे वपुषि कृशतां पाण्डुतामानने सा ॥५३

•

यः प्रावारः क्षितिसुरवरप्रावृतो दृष्टपूर्वो,
ऽनीशेनांसोपरिविनिहितं तं निरीक्ष्यायताक्षी ।
आदाय स्वे वपुषि विरहोषर्बुधं प्रावृतेन,
प्रावारेण प्रशममनयत् पश्यताहो !! विचित्रम् ॥५४

प्रावारोऽयं परिमलभृतः श्लाघनीयोऽतिमात्रं,
गात्रे पूर्वं कथय कृतिनः कस्य लग्नस्तयेति।
पृष्टेनान्तःपुरिकपतिनेत्येतदुचे वचस्त-
द्वाचोयुक्तावधिगतवता व्यञ्जनागम्यमर्थम् ॥५५



योऽसावन्तःपुरमृगदृशां पाठनस्याधिकारे,
विप्रो विप्राधिपमुखि! दयादेवनामा नियुक्तः।
प्रावारेऽस्मिन् परिमलभरस्तत्परिष्वङ्गलब्धो,
लब्धव्यो वा भुवि परिमलस्तादृशोऽन्यत्र कुत्र ॥५६



देह्यनं मे विधुमुखि! मया दत्त एवास्ति यस्य,
प्रावारोऽयं किमुत भवताप्रच्छ्यसौ पृष्ट एव।
इत्यन्योऽन्यं वचनरचनैवानयोर्दूतकृत्या-,
शङ्कातङ्कापनयनमकरोन्निष्प्रयत्नप्रवृत्ता ॥५७



रागो यातः क्व तव वदनात् पाण्डुतामादधाना-
ज्जानास्येनं न मम हृदये रागमायातमद्य।
किंस्विद् दृष्टो द्विजपतिरयं लोचने मे कृतार्थे,
जाते जन्म स्विदमथ कृतार्थं विधेयं त्वयैव ॥५८

इत्याज्ञप्ते यवनमुदृशाऽन्येद्युरेष द्विजं तं,
प्राप्योदन्तं विदितमकरोत् तत्पुरस्तात् समस्तम् ।
सौभाग्येऽस्मिन् विलसति पुनः कर्णयोस्तस्य दृग्भ्या-,
मीर्षादोषादजनि किमु तां द्रष्टुमुत्कण्ठिताभ्याम् ॥५९



अध्यासीनः सरसिजदृशां मध्यमध्यापनाया-
नीशेनासामनवकलितं पस्पृशे पाणिनासौ ।
संज्ञामेतामवगतवतस्तस्य दृग्दिक्तटेषु,
भ्राम्यन्ती द्राक् कलयति कलानाथमाराद् गवाक्षे ॥६०



दृष्टिस्तस्य क्षणमनु वधूत्फुल्लवक्त्राम्बुजात-
व्रातं यान्ती क्षणमथ तदीये मुखेन्दौ प्रयान्ती ।
भाति स्मेन्दौ सति विकसितान्यम्बुजातानि जाता-,
न्येवं मत्वातिशयविलसद्विस्मयव्याकुलेव ॥६१



सक्तं बिम्बाधररुचि ! भवेदेव चेतोऽस्य रक्त,
नैतच्चित्रं विलसतितरां किन्तु चित्रं तदेतत् ।
गण्डे पाण्डुच्छविजुषि परिष्वङ्गमासाद्य तस्या,
विप्रस्यान्तःकरणमभजद्रागमत्यन्तमेव ॥६२

अद्याधीषे किमपि चरितं दूतिकानामधीये,
किंस्वित् सार्थं पठसि तदहो !! पठ्यते स्वार्थमेव ।
जानासीह प्रियसखि ! किमु व्यञ्जनागम्यमर्थं,
जानाम्येनं क्वचिदपि विधौ काङ्क्ष्यते किं त्वयैषः ॥६३



मा शङ्किष्ठाः किमपि मयि तज्जीवितं मे त्वदीयं,
शङ्के नाहं कथमिव भवज्जीवितेशाभिलाषे ।
किं ते यातः क्वचिदपि दृशोर्गोचरे विप्रवर्यो,
ज्ञातं तर्हि त्वदभिलषितं स्वल्पमत्यन्तमेव । ॥६४



मा कार्पण्यं कुरु कुरु पदं दानशौण्डोत्तमाङ्गे-
ष्वेतां कीर्तिं कलय कलिता या न विद्याधरेण ।
प्रेयान्नक्तं तव मम दिवेत्येतदङ्गीकरोषि,
त्वं चेद्दूत्यं तव खलु तदाङ्गीकरोम्येवमस्तु ॥६५



इत्थं प्रश्नोत्तरवति रहोवाग्विलासे प्रवृत्ते,
कृत्वा सार्धं मुखलिसभुवा मानिकेति प्रतिज्ञाम् ।
प्रत्तां वीटीं द्विजपतिकृते सा तयाऽथो गृहीत्वा,
मुक्तागर्भां निजगृहमगादालयाज्जाफरीयात् ॥६६

वीटी वक्त्रं सदसि भवतश्चुम्बितुं नैव योग्या,
यस्मादेषा वयमिव चमत्कारमन्तर्बिभर्ति।
प्रत्यक्षं ते विरहजनितां पाण्डुतामुज्भतीयं,
तेनैव त्वत्करतलपरिष्वङ्गमासाद्य सद्यः ॥६७



प्रातः प्राप्ता परिषदि सहाध्यायिनीनां वधूनां,
दत्त्वा वीटीं क्षितिसुरमिति प्रत्यवोचद्वचः सा।
विज्ञायान्तर्मनसमयमप्यस्य किञ्चिद्रहस्यं,
नोपायुङ्क्त श्रियमिव रहो भोक्तुमेनामियेष ॥६८



ख्याताहिभ्यो जनिरिह पुनर्नाहिवल्लीदलेभ्यो,
मुक्तानामित्यत इव परं विस्मयं बिभ्रदन्तः।
उत्कील्य स्वं गृहमुपगतो वीटिकां तामपश्यत्,
ताराकाराः क्षितिसुरपतिस्तत्र मुक्ताश्चतस्रः ॥६९



आलापो यो मुखलिसभुवा सार्धमासीत्तमेनं,
प्राप्यैकान्ते कविमकथयत् साथ मुक्तार्पणान्तम्।
इत्यत्युक्ता परहितकृते मानमुक्तेऽपि कृत्ये,
सर्वासामप्यलभत ततो मानिकातीव मानम् ॥७०

गन्धेद्रव्याद्यवनविषयेष्वम्बरेति प्रसिद्धा-
द् बद्धैरक्षैः समुपरचितां मालिकां कण्ठदेशात् ।
उत्तार्याधादधिकरतलं मानिकायाः स विप्रः,
क्षिप्रं साऽपि प्रियसहचरीपाणिमेनामनैषीत् ॥७१



मूर्धन्याधादथ हृदि ततः पुञ्जितोष्ठे मुखेऽथो,
पक्ष्मण्यक्ष्णोरलिकफलके गण्डयोर्मण्डले च ।
पायं पायं तदनु सुचिरं पाणिगामेव बाला,
मालामेनां कथमपि निजे स्थापयामास कण्ठे ॥७२



तस्या देहे विरहदहनो मालया साधु शान्तिं,
नीतो नो चेत् क्षणमपि तया स्थातुमस्मिन्न शक्यम् ।
स्यादुद्योगो यदि गुणवतामात्मनोऽर्थे कदाचित्,
सोऽपि प्रायोऽपनयति परीतापमेवं परेषाम् ॥७३



नान्यो धन्यस्त्रिभुवनतले त्वादृशोऽनीश यस्मि-
न्नेकोऽपीषुः कुसुमधनुषो नैव लग्नः कदापि ।
तेनैव त्वं कलयसि मनागप्यहो !! न व्यथां मे,
नोचेदद्याप्यपनयविधौ नोद्यतः स्याः किमस्याः ॥७४

इत्युक्तोऽसौ रहसि सुदृशा सद्म यातस्तदीयं,
तामित्यूचे विधुमुखि ! मनाग्धैर्यमाधेहि चित्ते ।
यातु प्रान्तं दिनमिदमथायुष्मती जीवितेशं,
प्राप्स्यत्येव प्रहरविरतौ मद्गृहान्तर्निषण्णम् ।।७५



श्रुत्वाऽनीशोदितमिति वचो विस्मरन्ती मुहूर्तं,
सर्वामार्ति सपदि परमानन्दमग्ना बभूव ।
पश्चादस्या दयितमिलनोत्कण्ठया सार्धमेव,
प्रापद्वृद्धिं प्रतिपलमहो !! वासरोऽपि प्रकामम् ।।७६



गच्छानीश ! स्वसदनमिदं त्वद्वचो मान्यथा भूत्,
पातु प्राणान् मम यदि तवाकाङ्क्ष्यते चित्तवृत्त्या ।
नोचेदेषां क्षणविलसितं ज्ञायमानं तदेत-
द्दीपस्येवोपरमसमये नायतौ श्लाघनीयम् ।।७७



प्राप्यानुज्ञामिति मृगदृशो वेश्म यातः स्वकीयं,
यावच्चिन्तां रचयति हृदि द्रष्टुमेष द्विजेन्द्रम् ।
अस्य प्राप्तो नयनविषयं तावदेवात्मनासौ,
पूर्तिं चिन्तामणिमधरयंश्चिन्तितानां चकार ।।७८

सम्यग्जातं स्मरणसमये यत् समासादितोऽसि,
स्वान्तं मेऽद्य स्पृहयति सखे! सारिकाखेलनाय।
किञ्चैतस्मात् सुविदितमिदं तेऽस्तु यन्मामकीनात्,
स्वान्तादेकं क्षणमपि तवावस्थितिर्नेतरत्र ॥७९



उक्त्वेति प्रारभत कविना क्रीडनं तेन सार्धं,
क्लीबः किञ्चिन्न पुनरवदत् तं चिमन्या उदन्तम्।
हन्तैतावत्समयनयने ज्ञातसङ्केतवार्तो,
मार्तिं यासीदयमिति दयावान् दयादेव एव ॥८०



एवं क्रीडावहितहृदया वासरं न व्यजाना-
द्यातं यान्तीं कथमिव पुनर्वेत्ति सन्ध्यां स विप्रः।
गच्छन् म्लेच्छीं त्यजति तु पुरा मामयं तत् त्यजेयं,
कस्मान्नैनं ध्रुवमिति धिया सान्ध्यकर्मात्यजत् तम् ॥८१



व्यासङ्गेऽस्मिन् विलसति तयोर्यात एको रजन्या,
यामोऽप्यन्यादृशमिह पुनः किञ्चिदासीन्न चेतः।
सेयं क्रीडा जगति जयताद्यत्प्रसादादकस्मात्,
प्रापद्विप्रो यवनदुहितुः सङ्गमस्यावधिं सः ॥८२

सापि प्राणाधिपतिमिलनस्यावधेः पूर्तिहेता-
वम्भोजाक्षी भजति समये सन्निधिं सावधाना ।
नीत्वा द्वित्राः सह सहचरीः सत्वरं संप्रतस्थे,
सद्मानीशं प्रति निजगतिं विस्मरन्ती स्मरार्ता ।।८३



अन्तर्दत्तार्गलमथ गृहद्वारमाराद्विभाव्य,
स्वेनैवातित्वरितमररं पाणिनाताडयत् सा ।
तेनैतस्मिन् ध्वनिरुदभवद्यः स सर्वेन्द्रियेभ्य-
श्श्रोतोवृत्तिं युगपदुभयोः कर्ण एवाचकर्ष ।।८४



क्लीबः क्रीडां सपदि स परित्यज्य जप्यामपि स्वां
चक्रे द्वारं विवृतमुभयोर्भागधेयैः सहैव ।
प्रागामोदौ तत इव बहिर्निर्गमान्तः प्रवेशौ,
पश्चादन्तःपुरिकयवनाधीशवध्वावयाताम् ।।८५



हस्तेनास्य द्रुतमथ कटीबन्धनं संदधाना,
निर्गच्छन्तं बहिरिति महीलेखमेषा बभाषे ।
हिन्दूकाद्य व्रजसि हृदयं कुत्र मे चोरयित्वा,
लब्धोऽसि त्वं कथमपि मया मृग्यमाणश्चिरेण ।।८६

विप्रोऽहं तत् प्रणयपदवीं तेऽधिगन्तुं न योग्यो,
मैवं ब्रूयाः पुनरपि सखे ! योग्य एवासि यस्मात् ।
त्वन्माधुर्ये यदवधि मनो मग्नमासीन्ममासं
विप्राहं तत्प्रभृति पुरतः पश्य यज्ञोपवीतम् ॥८७



इत्यौत्सुक्यातिशयवशतो विस्मरन्त्यौचितीं स्वं,
भावाकूतं प्रथममिलने पातुमेवाप्रगल्भा ।
दूरीकृत्योरसिजशिखरादुत्तरीयाञ्चलं सा,
तिर्यङ्न्यस्तामुरसि दयितं दर्शयामास मालाम् ॥८८



पश्यत्येष स्तनमतनुना प्रेरितः किं नु किं वा,
मालामम्भोरुहदलदृशा पश्यति प्रेर्यमाणः ।
किञ्चैतस्यां यदभिलषितं दर्शितायां तयासीत्,
सिद्धिं निन्ये यदखिलमहो दृश्यमानः स्तनोऽस्याः ॥८९



ज्ञानं रुद्रे रचयति रतिं यः स विन्देदितीदं,
वेदैः सिद्धान्तितमपि मते मेऽपसिद्धान्त एव ।
तद्वक्षोजे विरचितरतेर्विप्रवर्यस्य यस्मा-
ज्ज्ञानं सर्वं लयमुपगतं प्रत्युतासीत् प्रमोहः ॥९०

ज्ञानं नश्येन्न कथमथवा न प्रमोहो भवेद्वा,
कस्मादस्य व्यधित यदयं द्वैतबुद्धि महेशे।
चित्रं तत्तु स्फुरति विरते ज्ञानजातेऽपि जाते,
मोहेऽप्येतन्मनसि भगवानात्मभूराविरासीत् ॥६१



तादृक् तस्मिन् समय उभयोः कापि शालीनतासी-
द्यादृक् ताभ्यां रहसि मिलने धृष्टता काङ्क्ष्यते स्म।
वामा रीतिः कुसुमधनुषो हन्त !! मध्येऽन्तरायं,
कर्तुं तस्मिन्नयमवसरे सात्त्विकानादिदेश ॥६२



एवं कञ्चित्समयमुभयोरप्यभून्मौनमेव,
प्रादुर्भूता तदनु वदनाद्भारतीति द्विजस्य।
कस्मिन् मार्गे मृदुतनु ! पदं न्यस्तवत्यस्तशङ्कं,
शोके यस्मिन्न मम मनसाप्युत्सुकेनापि गन्तुम् ॥६३



भाग्यस्यैवोपरि मम पयोजातजातं त्वयैत-
न्न्यस्तं मन्येऽपचितिविधया पूज्यतामागतस्य।
कांस्वित् कृत्वोपकृतिमनयोरेष आनृण्यमेष्या-
म्याज्ञां विज्ञे वितरसि यदि त्वं तदेवाचरामि ॥६४

इत्याकर्ण्य प्रणयिवचनं लोचने चारयन्ती,
नीचैः पाणि प्रसृतमभितः पाणिना वारयन्ती।
मन्दस्मेरे वदनकमले शोभयन्ती नकारं,
याता तस्मिन्नवसर इयं कञ्चिदन्यं प्रकारम् ॥६५



हस्तेनासौ वपुषि निहितं यत्र यत्रापनिन्ये
हस्तं निन्ये कविरपि पुनस्तत्र तत्र प्रसह्य।
वामा नीतिः स्मरनरपतेः पश्यताहो !! प्रयाता,
प्रीतिस्तस्मिन् समय उभयोर्यद्विरोधेन वृद्धिम् ॥६६



शैलो येन जितः सुखेन तदधःस्थानं तु यत्नं विना,
जेतव्यं खलु तेन कौतुकमिदं दृष्टं तदानीं पुनः।
तादृक् तस्य कुचोपरि करावस्थापने नाभव-
द्यत्नोऽजायत मेखलापरिसरे कर्तुं करं यादृशः॥६७



नकारं सीत्कारः स्मितमथ निरोद्धुं प्रियकरं,
करं यान्तौ प्रान्तेक्षितमपि दृशोर्भ्रूकुटिविधिम्।
विषेहे नैतस्मिन् समय इति भेदे सति मिथः,
कथं नोपादद्याद्यवनभुवमुद्योगरसिकः ॥६८

रसावेशोऽध्वर्युर्विलसितगणः सभ्यनिवहो,
युवा यज्वा यस्मिन्नपि च शमिता शम्बररिपुः ।
त्रपामेधे तस्मिन् कुतुकमिदमालोकि निखिलो,
निखातोऽन्तःकुण्डं यदभजत यूपः फलपदम् ॥९९



इति निधुवनक्रीडामेतौ परस्परमादृतौ,
निशि निशि तथा कुर्वाते स्म स्मरेण सुशिक्षितौ ।
पुनरपि यथा दुष्प्रापेयं भवेन्न भवेद्यथा
न कृतमिदमित्यन्तस्तापौ दिवा विरहे सति ॥१००



अनुनिशमवशिष्टं कर्तुमासीन्न किञ्चित्,
किमपि न कृतमेवं प्रत्यभात् तु प्रभाते ।
यवनपतितनूजे प्रोषिते भाग्यभाजो-
रिति विविधविलासैर्वासराणि व्यतीयुः ॥१०१



रस एव स ईश्वरः श्रुता-
विति निर्णीतमतोऽभिधीयते ।
चिमनीचरिते रसाश्रयं,
वचनं चेन्न मम श्रमोऽश्रमः ॥१०२

रिक्तीकृते निजतया भवभूतिमुख्यै-
र्भिक्षाटनं कृतवतः पुनरुञ्छवृत्त्या।
क्षेत्रे यदत्र खननेन "ममार्थलाभो,
यः कोऽप्यभूदिह महेशकृपैव हेतुः ॥१०३



शुक्लजनार्दनपुत्रो वत्साचार्यस्य दौहित्रः।
पठितालङ्कृतिशास्त्रो भट्टश्रीमण्डनच्छात्रः ॥१०४



हीराभिधानपातिव्रतमहसि प्राप्तनिजजन्मा।
कविनीलकण्ठशर्मा निरमाच्चिमनीचरित्रमिमम् ॥१०५



मिहिरमुनीन्दुमितेऽब्देऽतिक्रान्ते विक्रमादित्यात्।
शिवरात्रौ शिवपदयोर्निजकृतिराधायि नीलकण्ठेन ॥१०६

इति नीलकण्ठकविकल्पितं
चिमनीचरितं समाप्तम्।



# श्लोकानामनुक्रमणिका

●

## 'क ख ग घ' इति हस्तलिखितपुस्तकेषु प्राप्तानां पाठान्तराणां संकलनम्

श्लोकसंख्या

२—'मोहिनीनाम्' 'मोहनीनां' इति 'ग' संख्यके ।

३—'अलहबिरदी' 'अलहविरदी' इति 'ख' संख्यके ।

३—'स्वीचकारश्चवृत्तिम्' 'स्वीचकारान्ववृत्तिं' इति 'ग' संख्यके ।

४—'योऽयं' 'क' संख्यके तु पाठोऽयं न विद्यते ।

४—'मानिकाद्या नताङ्गीः' 'ग' सख्यके 'मानिकानतांगी' इति पाठो वर्तते ।

५—'तादृग्विप्रो' 'तादृग्वेशो' इति 'घ' संख्यके ।

५—त्येषां, 'किंचित्' इति 'ख' संख्यके, 'चेत येषां 'क' संख्यके एवं 'चेदेषां' इति 'ग' संख्यके ।

६—'रहसि' 'चरितं' इति 'ख', 'घ' संख्यकयोः ।

८—'सीत्कृतिं' 'सीत्कृतं' इति 'ग' 'घ' संख्यकयोः ।

८—'विसदृशि कृते' 'विसदृश कृते' इति 'घ' संख्यके ।

९—'काङ्क्षन्ती' 'काम्यन्ती' इति 'ग' संख्यके ।

१०—'नोन्नता' 'नोन्नतं' इति 'घ' संख्यके ।

१३—'यासां' 'वासां' इति ख' संख्यके ।

१४—'युवतीः' 'युवतीं' इति 'क' संख्यके ।

१६—'सहि' 'सह' इति 'क' संख्यके ।

श्लोकसंख्या

१६—'प्रलयदिवसो' 'समयो' इति 'ख', 'घ' संख्यकयोः।
२०—'दातु' 'कर्तु' इति 'ख' संख्यके।
२१—'विपुलः' 'बहुलः' इति 'ख' संख्यके।
२२—'दिष्ट्या' दृष्ट्या, 'दिष्टया दिष्ट्या' इति 'घ' संख्यके।
२६—'ज्योत्स्ना' 'ज्यौत्स्ना' इति 'क' संख्यके एवं 'ज्योत्स्नी इति इति 'ग' संख्यके।
३३—'प्रलयसमये' विलयसमये' इति 'ख' संख्यके।
३६—'रजनीमल्पमेवावशिष्टां' रजनीमल्पमेवावशिष्टं' इति 'क' संख्यके।
३७—'प्रादुः ष्यान्नौ' 'प्रादुष्यान्नौ' इति 'क ख घ' संख्यकेषु।
३६—'बाँगशब्दः' बांगशब्दः' इति 'ख ग घ' संख्यकेषु।
४१—दर्शे दर्शे, दृष्ट्वा, दृष्ट्वा' इति 'ख घ' संख्यकयोः।
४२—'मिवोत्कण्ठते' 'मिवोत्कम्पते' इति 'घ' संख्यके।
४३—'न प्रयाताः' 'नावतीर्णा[:]' इति 'ख' संख्यके।
४४—'कौतुकं' 'कौतुकानि' इति 'घ' संख्यके।
४५—'व्यक्तमास्येन' 'वक्तुमीष्टेन' 'इति 'क घ' संख्यकयो' एवं, वक्तुमीच्छेन 'इति' 'ग' 'व्यक्तुमाषेन' इति 'ख' संख्यके च।
४६—'किं चैतस्मिन्नखिल' 'किं त्वेतस्मिन्नखिल' इति 'ख घ' संख्यकयोः।
५१—'दलहविरदी' 'दलहबिरदी' इति 'ख' संख्यके। दैवादेशात्, 'देवादेशात्' इति 'ख ग' संख्यकयोः।
५२—'तादृग्' 'तादृक् नून' इति 'क ख ग घ' संख्यकेषु। 'नन्दनेऽपि' 'मन्यतेऽपि' इति 'घ' संख्यके। 'तया नो तुला स्यात् तदीये' 'तुला नेतया स्यात्त्वदीये' इति 'ख' संख्यके; 'तुला नो तदास्यात्तदीये, इति 'घ' संख्यके च।
५३—'श्वासोल्लासे' 'श्वासोच्छ्वासे' इति 'घ' संख्यके।

श्लोकसंख्या

५६—'परमल' 'परिमलरस' इति 'ग' संख्यके।

६०—'द्राक् कलयति' 'द्राग कलयत' 'क ग घ' इति संख्यकेषु।

६१—'प्रयान्ती' 'प्रयाता' इति 'ग' संख्यके। 'स्मेन्दौ सति विकासिता' 'स्मेन्दौ सितविकसिता इति 'ख ग' संख्यकयोः।

६४—'दृशोर्गोचरे' दृशां गोचरे 'ग' संख्यके।

७३—'परीतापमेवं परेषां' 'तापमेवा एषां' इति ख संख्यके।

७४—'नान्यो' 'मन्ये' इति 'ख घ' संख्यकयोः।

७७—'क्षण विलसितं' 'क्षण विलसनं' इति 'ख ग घ' संख्यकेषु।' 'ज्ञायमानं' 'जायमानं' इति 'ख ग घ' संख्यकेषु।

८१—'क्रीडावहित हृदयो' 'क्रीडाविहित हृदयो' इति 'ख' संख्यके। 'कस्मान्नैनं' 'कस्मान्नैतं' इति 'ख' संख्यके।

८२—'तथोर्याति' 'तथोर्याति' इति 'ग' संख्यके, 'जातः इति 'घ' संख्यके च।

८३—'पूर्ति हेतावम्भो' 'पूर्तिहेतौ अंभो०' इति 'क' संख्यके।

८४—'सर्वेन्द्रियेभ्य' सर्वेद्रियेभ्यः' इति 'क ख' संख्यकयोः।

८६—'हस्तेनास्य' 'हस्तेनाथ' इति 'ख' संख्यके।

८७—० 'मास विप्राहं तत्प्रभृति' ० ममाहं संविप्रा तत्प्रभृति' इति 'ग' संख्यके। विप्राह 'विप्रोहं इति 'ख घ' संख्यकयोः।

९०—'यस्माज्ज्ञानं' 'सर्वं ज्ञानं' इति 'ख घ' संख्यकयोः।

९१—'महेशे' 'महेशो' 'क ख घ' संख्यकेषु, 'महेशै' इति 'ग' संख्यके च।

९२—'तस्मिन्नयम'० 'कस्मिन्नयम'० इति 'क ख ग घ' संख्यकेषु।

९४—'भाग्यस्यैवोपरि' 'भागस्यैवोपरि 'इति 'ग' संख्यके।

९५—'चारयन्ती' 'बारयंती' इति 'ख' संख्यके, चारयंती इति 'ग' संख्यके च।

श्लोकसंख्या

९६—यत्र 'यत्रापनिन्ये' 'यत्र तत्रापनिन्ये' इति 'क' संख्यके ।

९८—'निरोद्धुं' 'विरोद्धुं' इति 'क' संख्यके । 'यान्तौ' 'यातौ' इति 'ख' संख्यके ।"

१००—'त्यन्तस्तापौ' 'त्यन्तस्तापो' इति 'ग घ' संख्यकयोः ।'

१०२—रसाश्रयं, 'रसाश्रितं इति 'ख घ' संख्यकयोः ।

१०३—'कृतवतः' 'कृतवता' इति 'क ख ग घ' संख्यकेषु ।

१०४—
१०५— } 'शुक्लजनार्दनपुत्रो०' 'हीराभिधान०' 'घ' संख्यके हस्त-लिखित पुस्तके वर्तते एव न ।

[ पूर्वशब्दस्तु प्रस्तुतसंस्करणे प्रयुक्तः-अग्रिमशब्दःपाठभेदसूचकः । ]

# चिमनीचरितस्य ऐतिहासिकता

●

डॉ० प्रभाकरशास्त्री

भारतीयवाङ्मये प्रेमाख्यानानां विद्यते स्वतन्त्रमस्तित्वम्। प्रेमाख्यानेष्वपि कवयः संयोगापेक्षया वियोगस्य वर्णने स्वचातुर्यं प्रदर्शयन्ति। यथा पण्डितराजस्य जगन्नाथस्य यवनकन्यया 'लवंगिका' नामिकया सह प्रेम तत्प्रणयवर्णनं च विद्वांसः प्रमाणयन्ति तथैव यवनकन्यायाः 'चिमनी'-त्याख्यायाः राजकुमार्याः प्रणयोपाख्यानमपि प्रमाणीकर्तुमत्र विचारणा क्रियते।

सर्वप्रथमं श्रीनीलकण्ठकविरचितं 'चिमनीचरिताख्यम्' काव्यमिदं ख्रिस्तीय १८९६ ईशाब्दे गवेषितमासीत्, यस्योल्लेखः 'केटेलोगस् केटेलोगोरम्' नाम्नः सूचीपत्रस्य द्वितीयखण्डे समुपलभ्यते। अस्य काव्यस्य अनेकाः प्रतयः विभिन्नेषु ग्रन्थागारेषु प्राप्यन्ते। श्री पी. के. गोडे महोदयेन १९२८ ख्रिस्ताब्दे सर्वप्रथमम् अस्य परिचयात्मकं विवरणादिकं एनल्स ऑफ भण्डारकर ओरियन्टल रिसर्च इन्स्टीट्यूट (पूना) नामिकायाः पत्रिकायाः नवमखण्डस्य ३३१-३३२ पृष्ठांके प्रकाशितम्। तत्र हि तेन ग्रन्थस्य रचनासमयविषये स्वमतं संस्थापितं यत् प्रेमाख्यानमिदं कविनीलकण्ठेन १६५६ ख्रिस्ताऽब्दे रचितम्, न तु १४१४ ख्रिस्ताऽब्दे, यथा श्रीपोटरसनमहोदयेन कल्पितमासीत्। प्रो. गोडे महोदयेन द्वितीयं शोधपत्र प्रस्तुतं यस्य शीर्षकमासीत्—Historical Background of the 'chimni-charitam' अस्मिन् शोधपत्रे सः नासिकनगरस्थशिलालेखानां पर्शियन्न (पारसीक) प्रमाणानाञ्च संकेतं कृतवान्। ख्रिस्तीयसप्तमदशकशताब्द्यां विद्यमानानां अलहविरदीखानमुखलिसजाफरादीनाम् ऐतिहासिकदृष्ट्या परिचयादिकं समुपस्थाप्य संकेतितवान् रचनामहत्त्वम्। अस्मिन् काव्ये एतेषां विषये एवमुपलभ्यते—

चेतोवृन्दान्यलहविरदीखानसोमन्तिनीनाम् (२)
सोऽयं दैवादलहविरदीखाननामानमेत्य (३)
यासावासीदलहविरदीज्येष्ठबन्धोस्तनूजा
भार्यात्वं चाप्यलहविरदोज्येष्ठसूनोरयासीत् । (५१)
मुक्तागर्भा निजगृहमगादालयाज्जाफरोयात् । (६६)
कृत्वा सार्द्धं मुखलिसभुवा मानिकेति प्रतिज्ञाम् (६८)
आलापो यो मुखलिसभुवा सार्धमासीत्तमेनम् । (७०) इत्यादि।

श्री पी० के० गोडेमहोदयाः काव्यस्यास्य नायकस्य श्रोदयादेवशर्मणः विषये सर्वथा मौनमेवालम्बन्ते। यद्यपि ते नायिकायाः चिमन्याः तस्याः पितुः भर्तुः ज्येष्ठादीनां समुल्लेखनेन अस्य काव्यस्य ऐतिहासिकतां पुष्णन्ति, परं कथानकस्य प्रेमाख्यानस्य वा सत्यताविषये न किमपि कथयन्ति । अस्मिन् लेखे एतत् सर्वमपि व्याख्यातुकामोऽहम्।

**कथानकसंक्षेपः**

अस्य प्रेमाख्यानस्य नायिका 'चिमना' एका यवनमहिला आसीत्, या हि यवनसम्राजः 'शाहजहाँ' इति नामकस्य मन्त्रिणः खानखाना अल्लाहवर्दीखानस्य ज्येष्ठभ्रातुः मुखलिसखानस्य पुत्री आसीत्, तस्याः पाणिग्रहणमपि अल्लाहवरदीखानस्य ज्येष्ठपुत्रेण जाफरेण सह सम्पन्नमभवत् । यथा—

यासावासीदलहविरदीज्येष्ठबन्धोस्तनूजा,
भार्यात्वं चाप्यलहविरदोज्येष्ठसूनोरयासीत् ।
याता ख्यातिं जगति चिमनीत्याख्यया या गवाक्षे,
दैवादेशात् क्वचिदथ दयादेवमेषा ददर्श ॥ ५१

काव्यस्य प्रारम्भे कविः नीलकण्ठः नायकस्य वर्णनम् एवं प्रस्तौति—

आसीदाशीर्वचनविषयः पश्यतामाननाब्जं,
सौन्दर्यान्तःकरणमवनीकौतुकं काव्यतत्त्वम् ।

चिमनीचरितस्य ऐतिहासिकता

स्फूर्तेर्मूर्तिर्मदनमहिमा भारतीभागधेयं,
क्रीडास्थानं रसिकमनसां श्रीदयादेवशर्मा ॥ १

श्रीदयादेवशर्मा दैवाद् अलहविरुदीखानस्य सविधे गच्छति। स हि तं शर्माणं स्वान्तःपुरयुवतीनां प्राध्यापकत्वेन नियुङ्क्ते। 'घृतकुम्भसमा नारी तप्तांगारसमः पुमान्। तस्माद् घृतञ्च वह्निञ्च नैकत्र स्थापयेद् बुधः' वचनमिदं स्मारं स्मारं तेन तासां पठनसमये 'नीश' नाम (अनीश इति वा) एकः क्लीबः नियुक्तः।[1] परं तस्य नियुक्तिः निष्फलैव संजाता, यतो हि स तासां प्रणयचेष्टासु अंगस्पर्शनादिमुखविलोकनादिक्रियासु सर्वथा 'अनीश' एव सिद्धः।[2] मालिकाद्याः नताङ्ग्यः स्वप्राध्यापकस्य श्रीदयादेवशर्मणः सौन्दर्येण अत्यधिकरूपेण आकृष्टा बभूवुः, यत् ताः तस्य क्षणवियोगमपि सोढुमशक्ताः बभूवु.। षोडशश्लोकतः प्रारभ्य पञ्चाशत् पद्यपर्यन्तं कविना नीलकण्ठेन यवनकुमारीणां वियोगवर्णनमधिकृत्य वैविध्यं चित्रितमस्ति। यथा—

दातुं वीटीं पुर इव कृतो यावदेवाग्रहस्तः,
तावत् पश्चादहह !! विरहाशङ्कयाकृष्यते स्म।
हा !! धिग्यातेऽप्यहनि गुरुणा प्रार्थ्यमाने विदाये;
तन्व्या वीटीवितरणविधिर्नाध्यगच्छत् समाप्तिम् ॥ २०

कविसमयमनुसृत्य श्रीनीलकण्ठेन चन्द्रोपालम्भनादिवर्णनमपि प्रस्तुतम्। चन्द्रं निर्दिश्य कापि यवनी कथयति वियोगातुरा—

---

१. अभाष्यैवं यवनपतिना 'नीश' नामा नियुक्तः,
क्लीबस्तासां पठनसमये पार्श्व आसां बभूव ॥ श्लो. ६

२. पाणिस्पर्शो लिखनसमये तेन किं वारणीयो,
वर्णोच्चारे वदनकमलालोकनं किं निवार्यम्।
किं वा काव्यादभिमतविधेर्बोधनं शोधनीयं,
कृत्येऽनीशः समजनि निजे सर्वतोऽनीश एव ॥ ७

केनापीन्दोर्हृदयमदयं हन्त ! निष्कृष्य नीतं,
तस्मादेव स्फुरति गगनं मध्यभागेऽस्य रिक्तं ।
यच्चैतस्मिन् हृदयरहिते नास्ति कारुण्यमीषत्,
तेनैवेन्दुर्व्यथयतितरां मादृशीः क्रूरकर्मा ॥३०

एवं तासां विप्रलम्भदशादिकं वर्णयन् कविः एकपञ्चाशत्तमे पद्ये नायिकां चिमनीं प्रस्तौति, यथा नायको दयादेवशर्मा दैवाद्दृष्टः ।[1] नायकस्य प्रावारकं नीशस्य सविधे दृष्ट्वा सा नायिका तमाहृत्य शान्तिं प्राप[2] तस्य परिचयञ्च पृष्टवती । नीशः कथयति—

योऽसावन्तःपुरमृगदृशां पाठनस्याधिकारे,
विप्रो विप्राधिपमुखि ! दयादेव नामा नियुक्तः ।
प्रावारेऽस्मिन् परिमलभरस्तत्परिष्वङ्गलब्धो,
लब्धव्यो वा भुवि परिमलस्तादृशोऽन्यत्र कुत्र ॥५६

नायिकायाः चिमन्याः दयादेवशर्माणं प्रति अनुरक्तिं वीक्ष्य मानिकाद्याः यवनकुमार्यः नीशश्च प्रेमकर्मणि सहयोगं कृतवन्तः । मानिका नायिकातः वीटिकामुपगृह्य[3] नायकाय दयादेवशर्मणे दत्त्वा तमुवाच—

वीटी वक्त्रं सदसि भवतश्चुम्बितुं नैव योग्या,
यस्मादेषा वयमिव चमत्कारमन्तर्बिभर्ति ।
प्रत्यक्षन्ते विरहजनितां पाण्डुतामुज्झतीयं,
तेनैव त्वत्करतलपरिष्वङ्गमासाद्य सद्यः ॥६७॥

---

१. याता ख्यातिं जगति चिमनीत्याख्यया या गवाक्षे,
दैवादेशात् क्वचिदथ दयादेवमेषा ददर्श ॥ (५१)

२. यः प्रावारः क्षितिसुरवरप्रावृतोऽदृष्टपूर्वो-
ऽनीशेनांसोपरि विनिहितं तं निरीक्ष्यायताक्षी ।
आदाय स्वे वपुषि विरहोषर्बुधं प्रावृतेन,
प्रावारेण प्रशममनयत् पश्यताहो ! विचित्रम् ॥ (५४

३. आलापो यो मुखलिसभुवा सार्धमासीत्तमेनं,
प्राप्यैकान्ते कविमकथयत साथ मुक्तार्पणान्तम् ।७०

यदा गृहमुपगतेन नायकेन वीटिका उत्कील्य दृष्टा, तदा तेन चतस्रः मुक्ताः प्राप्ताः[1] । नायकेन स्वकण्ठदेशादवतार्य रुद्राक्षमाला प्रत्यर्पिता—

गन्धद्रव्याद्यवनविषयेष्वम्बरेति प्रसिद्धाद्,
बद्धैरक्षैः समुपरचितां मालिकां कण्ठदेशात् ।
उत्तार्याधादधिकरतलं मानिकायाः स विप्रः,
क्षिप्रं सापि प्रियसहचरीपाणिमेनामनैषीत् ॥७१

एवम् अर्पणप्रत्यर्पणकर्मणा तयोः सम्मेलनमत्यावश्यकमिति मत्वा अनीशेन सारिकाखेलनाय स्वगृहमाहूतो नायको दयादेवशर्मा । वार्तालापप्रसंगेन च चिमन्या उदन्तं प्रस्तुतीकृत्य तयोः सङ्गममपि तत्रैव कारयामास । यथैव नायिका तत्राजगाम तथैव नायकः तस्मात् स्थानात् पलायितुं प्रायतत परं साफल्यं न प्राप्तवान् । कविः वर्णयति—

हस्तेनास्य द्रुतमथकटीबन्धनं संदधाना,
निर्गच्छन्तं बहिरिति महोलेखमेषा बभाषे ।
हिन्दूकाद्य व्रजसि हृदयं कुत्र मे चोरयित्वा,
लब्धोऽसि त्वं कथमपि मया मृग्यमाणश्चिरेण ॥८६

एवं तयो विस्तृतं संलपनमुपवर्ण्य कविः प्रेम्णः चरमावधिं प्रकटयामास निम्नाङ्कितै पद्यै—

रसावेशोऽध्वर्युर्विलसितगणः सभ्यनिवहो,
युवा यज्वा यस्मिन्नपि च शमिता शम्बररिपुः ।
त्रपामेधे तस्मिन् कुतुकमिदमालोकि निखिलो,
निखातोऽन्तःकुण्डं यदभजत यूपः फलपदम् ॥६६

---

१. उत्कील्य स्व गृहमुपगतो वीटिकां तामपश्यत्,
तारकाराः क्षितिसुरपतिस्तत्र मुक्ताश्चतस्रः ॥६६

इति निधुवनक्रीडामेतौ परस्परमादृतौ
निशि निशि तथा कुर्वाते स्म स्मरेण सुशिक्षितौ
पुनरपि यथा दुष्प्रापेयं भवेन्न भवेद्यथा
न कृतमिदमित्यन्तस्तापौ दिवा विरहे सति ॥१००

अनुनिशमवशिष्टं कर्तुमासीन्न किञ्चित्,
किमपि न कृतमेव प्रत्यभात् तु प्रभाते।
यवनपतितनूजे प्रोषिते भाग्यभाजो-
रिति विविधविलासैर्वासराणि व्यतीयुः ॥१०१

एवमुक्त्वा कविः मौनावलम्बनं चकार। परतः किमभूत् नायकस्य, नायिकायाश्च कीदृशी स्थितिः संजातेति न किमपि प्रकटीचकार। यत्र विषये किञ्चिद् वक्तुकामोऽहं ग्रन्थान्तरतः प्रमाणमुपस्थापयामि।

रायबहादुरोपाधिधारिणा श्रीगौरीशंकरहीराचन्द ओझामहाभागेन राजपूतानाप्रान्तस्य स्वलिखिते इतिहासे (चतुर्थभागे द्वितीयखण्डे-जोधपुर राज्यस्येतिहासस्य द्वितीये खण्डे) महाराज्ञो भीमसिंहस्य वर्णनं कृतमस्ति। महाराजस्य विजयसिंहस्य पुत्रः महाराजस्य भीमसिंहः १९ जुलाई सन् १७६६ ख्रिस्ताऽब्दे जनिं लेभे। २० जुलाई १७९३ वर्षे स जोधपुरनगरे सिंहासनमधिरूढः। १९ अक्टूबर १८०३ ख्रिस्ताब्दे ३७ वर्षवयसि एव दिवंगतः।

अस्यैव महाराजस्य भीमसिंहस्य यशोवर्णनात्मकं 'भीमप्रबन्धाख्यं' काव्यमेकं प्राप्यते, यस्य लेखको भट्टोपाह्वो हरिवंशशर्मा आसीत्। सोऽयं जात्या श्रीमालीब्राह्मणः भट्टलालस्य पुत्रः, पौराणिकशिवभट्टस्य च पौत्रः आसीत्। स्वयं कविः भीमप्रबन्धस्य विंशसर्गे स्वपरिचयमेवं समुपस्थापितवान् –

पौराणिकोऽजीतनराधिपस्य भट्टः शिवस्तस्य सुतो हि लालः।
तदात्मजोऽहं हरिवंशभट्टो नृपाज्ञया काव्यमिदं चकार॥
२०।११०

इति श्रीभीमप्रबन्धे महाकाव्ये श्रीमालिब्राह्मणकुलजातभट्टहरिवंशकृतौ दुर्गादिवर्णनो नाम विंशतितमः सर्गः। समाप्तश्चायं ग्रन्थः।

अस्मिन् काव्ये भीमसिंहस्य पूर्ववर्तिनां राज्ञां वर्णनं तु विशेषरूपेण नोपलभ्यते, यत् प्राप्यते तस्य सर्गानुसारिवर्णनमत्र प्रस्तूयते। यथा—

'इति श्री···कृतौ वंशवर्णने राज्यलाभः (१), भ्रातृवर्गसंबान्धववर्ग-वर्णनम् (२), विवाहवर्णनम् (३), वसन्तवर्णनम् (४), अमात्यादिराज-प्रकृतिवर्णनम् (५), राजिकोद्याने वसन्तक्रीडावर्णनम् (६), बाल-सिंधूद्याने वसन्तक्रीडावर्णनम् (७), सूरसागरोद्याने वसन्तक्रीडावर्णनम् (८), मंडोवरोद्याने वसन्तक्रीडावर्णनम् (९), मंडोवरपंचकुण्ड-वैजनाथमंडलेश्वरभोगशैलनागनदीवर्णनम्, (१०), नागनदीयात्रा-वर्णनम् (११), मुक्ताफलहर्म्ये लक्ष्मीगृहे वसन्तक्रीडावर्णनम् (१२), वसन्तक्रीडावर्णने जातकोत्सववर्णनम् (१३), गौरीयात्रावर्णनम् (१४), विज्ञप्तिप्रस्तावर्णनम् (१५), मृगयाविहारः (१६), सकलसामन्त-वर्णनम् (१७), मन्त्रिवर्गवर्णनम् (१८), कोष्ठरक्षकारिवर्णनम् (१९)अधि-कारादिवर्णनम्, सकलहर्म्यवर्णनम् दुर्गादिवर्णनम् (२०)'

अस्यैव काव्यस्य अष्टादशसर्गे चिमनीचरितस्य नायकस्य श्रीदयादेव-शर्मणः वर्णनमुपलभ्यते, येन काव्यस्यास्य ऐतिहासिकता सिद्ध्यति। यथा—

अलोहवृद्धेः[1] हि सुतं महान्तं या ज्येष्ठबन्धोः दुहिता च तस्य।
उद्वाहिता सा चिमनी गवाक्षे दैवात् दयादेवमपश्यदेषा ॥९४

१. ['अलोहवृद्धेः' इति अल्लाहवर्दीखानस्य, ज्येष्ठबन्धोः मुखलिस खानस्य, दुहिता चिमनी, या तस्य महान्तं सुतमिति जाफरम् उद्वाहिता सैव चिमनी दैवात् कदाचिद् गवाक्षे स्थिता दयादेवशर्माणमपश्यत्। चिमनी-चरितस्य पद्य स ५१त साम्य समवलोकनीयम्—

यासावासीदलहविरदीज्येष्ठबन्धोस्तनूजा,
भार्यात्वं चाप्यलहविरदीज्येष्ठसूनोरयासीत्।
याता ख्यातिं जगति चिमनीत्याख्यया या गवाक्षे,
दैवादेशात् क्वचिदथ दयादेवमेषा ददर्श ॥ ५१ ॥ इति]

विप्रो दयादेव हि काममूर्त्तिः भाषासु काव्येषु बुधाग्रणी च ।
तं खाननामानमुपेत्य वृत्तिमन्तःपुरे स्त्रीपठने चकार[1]॥६५
स पाठयन् वै चिमनीपुरोगा मुमोह विप्रः स्मरबाणभिन्नः ।
क्लीबोऽपि तासां पठने नियुक्तः, तथापि ताः प्रेमवशाः बभूवुः[2] ॥६६
सा मोहिता वै चिमनी द्विजाय[3] ददौ हि मुक्ताः गुरवे चतस्रः ।[4]
विज्ञाय म्लेच्छाधिपतिश्चरित्रम् सभ्रातरं भित्तिममुं निनाय ॥६७

---

१. चिमनी चरितस्योद्धरणैः साम्यमवलोकनीयम्—
स्फूर्तेर्मूर्तिर्मदनमहिमा भारतीभागधेयं,
क्रीडास्थानं रसिकमनसां श्रीदयादेवशर्मा ॥१
सोऽयं दैवादलहविरदीखाननामानमेत्य,
म्लेच्छाधीशं प्रकटितगुणः स्वीचकारश्च वृत्तिम् ।
तत्राप्येष स्मरसहचरे वर्त्तमानो वयस्य-
प्युद्युक्तोऽन्तःपुरमृगदृशां पाठनस्याधिकारे ॥३

२. तादृक् तासां रहसि मिलनं तादृशी रूपसंपत्,
तादृग्वेषो विलसितमहो ! यौवनस्यापि तादृक् ॥५
आभाष्यैव यवनपतिना नीशनामा नियुक्तः
क्लीबस्तासां पठनसमये पार्श्वं आसां बभूव ॥६

कृत्येष्वनीशः समजनि निजे सर्वतोऽनीश एव ॥७
ताभिस्तेनाप्यसति मिलनेऽनेकयामा त्रियामा ।
कोकद्वन्द्वैरिव न कथमप्यन्तमानीयते स्म ॥१७

३. चेतश्चेतो भवपरिभव देहदीप्त्या दधाने,
तस्मिन् विस्मापितदृशि समाधाय तस्माद्ववाप ।
द्वेषं पत्यौ, विषमविशिखेऽधीनतां, पीनतां च,
श्वासोल्लासे वपुषि कृशतां पाण्डुतामानने सा ॥५३
उत्कील्य स्वं गृहमुपगतो वीटिकां तामपश्यत् ।
ताराकाराः क्षितिसुरपतिस्तत्र मुक्ताः चतस्रः ॥६९॥ इत्यादि ।

यो माधवो वै जनकस्तदीयः पितृव्यपुत्रस्य सुतस्य वार्त्ताम्
श्रुत्वा समादाय स मौक्तिकानि स्वदेशमागत्य तुलाञ्चकार ॥९८
यः शाहिजानस्य बभूव धीमान्, नलेहवृद्धिस्त्वथ खाननामा ।
मन्त्री च साहित्यरसाभिविज्ञो, महावदान्यो विदुषां गुणज्ञः ॥९९
इत्यादि ।

एभिः श्लोकोद्धरणैः प्रतीयते–यत् पण्डितदयादेवशर्मणः चिमन्याश्च प्रणयसम्बन्धिनीं वार्ता श्रुत्वा सर्वतश्च परिज्ञाय म्लेच्छाधिपतिः पातसाहः शाहजहाँ तं नायकं दयादेवशर्माणं तस्य च पितृव्यपुत्रं भ्रातरं जीवितमेव भित्तौ निनाय। तस्येदृशीं विपत्तिमवलोक्य दयादेवशर्मणः पिता श्रीमाधवभट्टः ताः चतस्रः मुक्ताः समादाय स्वदेशं जोधपुरनगरं प्रति समाजगाम। तत्र च तुलाञ्चकार।

पण्डितदयादेवशर्मणः वंशजेन स्वर्गतेन श्रीबदरीशर्मभट्टेन वार्ताप्रसंगे म्लेच्छाधिराजतनयायाः चिमन्याश्चरित्रविषये विस्तरेण निवेदितं हस्तलिखितप्रतिश्चैका प्रदर्शिता। स मां तत्स्थानमपि प्रदर्शितवान् यत्र अद्यापि माधवेश्वरनामकः शिवालयो विद्यते। उच्यते यत् पण्डितदयादेवशर्मणः पिता श्रीमाधवभट्टः स्वपुत्रस्य अपमृत्युदोषनिवारणार्थं ताश्चतस्रः मुक्ताः विक्रीय ताभ्यः संप्राप्तेन द्रव्येण महारुद्रयागं तुलादानविधिं च सम्पादितवान्। तुलायागस्य महारुद्रयागस्य च कुट्टिमस्थानमद्यापि भट्टानां वासे ब्रह्मपुर्यां ( भट्टों का वास, ब्रह्मपुरी ) विद्यते। अस्य कुट्टिमस्य ( चबूतरा ) पार्श्वे एव श्रीमाधवभट्टस्य निवासस्थली वर्तते। साम्प्रतं तस्य वंशे न कोऽपि विद्यते। एतेषां वंशे सर्वान्तिमौ पुरुषौ भट्टश्रीज्येष्ठमलभट्टवनजीमहाशयावास्ताम् ययोः द्वे कन्ये पण्डितबदरीशर्मभट्टमहाशयस्य पितामहेन श्रीपरशुरामेण तस्य भ्रात्रा श्रीद्वारेश्वरजोशिना च उद्वाहिते। तयोः कन्ययोः वंशप्रवर्तनाय श्रीद्वारकादत्तभट्टमहाशयः दत्तकपुत्ररूपेण

विद्यते यो हि महाशयः पण्डितबदरीशर्मभट्टस्य भागिनेयः मम पितृचरणानाञ्च शिष्यरूपेण शास्त्रिपरीक्षामुत्तीर्णवान् बहुकालपूर्वम् ई० १९४६ तमे वर्षे ।

श्रीद्वारिकादत्तभट्टमहाशयेन पुरातनीमैतिहासिकीं सामग्रीमालोड्य विगते वर्षे मह्यं प्रेषितवान् किमपि सारजातं पण्डितमाधवभट्टस्य पण्डितदयादेवशर्मणश्च वंशादिविषये। 'भीमप्रबन्ध' महाकाव्यस्य लेखकः श्रीहरिवंशशर्मापि श्रीमाधवभट्टवत् राज्ञा संमानित आसीत् । भट्टोपाह्वश्च राज्ञा दत्तः उपाधिः । पण्डित दयादेवशर्मणः समकालिकत्वात् सोऽयं श्रीहरिवंशः चिमन्या उदन्तेन सुपरिचित आसीत् । भीमप्रबन्धस्य अष्टादशसर्गसमाप्तौ तेन अल्लाहवर्दीखानस्य वर्णनमेवं प्रस्तुतम्—

'योऽसावासीदलहविरदीखाननामा पुरासीत्,
मन्त्री श्रीमान् गुणिजनरतः पुण्यकर्मा वदान्यः ।
नीतौ शक्तः शमदमरतः शाहिजानस्य यादृक्,
नाभूद् विश्वे प्रकटितगुणस्त्वीदृशश्चैव धीमान् ।।१७१'

इति भीमप्रबन्धमहाकाव्ये भट्टश्रीहरिवंशकृतौ अधिकारिवर्णनो नाम अष्टादशसर्गः ।

पण्डितमाधवभट्टस्य समये वैक्रमाऽब्दे १६५२ वर्षे जोधपुरनगरे श्रीसूरसिंहनामकः राजा आसीत् । तस्य पुत्रः नाम श्रीगजसिंहो प्रथमः आसीत् यस्य वर्णनं श्रीहरिवंशभट्टेन भीमप्रबन्धकाव्ये कृतमस्ति । श्रीगजसिंहप्रथमस्य श्रीजसवन्तसिंहः, तस्य श्रीअजीतसिंहस्य श्रीअभयसिंहः, तस्य श्रीरामसिंहः श्रीरामसिंहस्य श्रीबख्तसिंहः, तस्य श्रीविजयसिंहः, विजयसिंहस्य च उत्तराधिकारी श्रीभीमसिंहः आसीत् । अस्य वंशवृक्षः एवं प्रस्तोतुं शक्यते—

## चिमनीचरितस्य ऐतिहासिकता




श्रीसूरसिंहस्य शासनकाले सं. १६५२ वर्षे श्रीदयादेवशर्मणः स्थितिरासीत् । श्रीनीलकण्ठकविना 'चिमनीचरितस्य' प्रणयनं सं. १८१२ वर्षे कृतमिति निम्नांकितेन पद्येन सिद्ध्यति—

मिहिरमुनीन्दुमितेऽब्देऽतिक्रान्ते विक्रमादित्यात् ।
शिवरात्रौ शिवपदयोर्निजकृतिराधायि नीलकण्ठेन ॥१०६

'अङ्कानां वामतो गतिः' इतिनियमानुसारेण मिहिरः = १२, मुनिः = ७, इन्दुः = १ = १७१२ वैक्रमाब्दे शिवरात्रौ कविनीलकण्ठेन चिमनीचरितात्मकं काव्यमिदं शिवपदयोराधायि । श्रूयते यत् शुक्लजनार्दनपुत्रेण श्रीवत्साचार्यस्य दौहित्रेण श्रीनीलकण्ठेन चिमनीचरितस्य निर्माणमपि माधवेश्वरमहादेवमन्दिरे जोधपुरनगरे कृतमासीत् ।

एवं सिद्ध्यति यत् चिमनीचरितस्य नायकः पण्डितदयादेवशर्मा नायिका च 'चिमनी' कल्पितपात्ररूपेण न ग्रहणीयौ । घटना चेयं सत्या प्रामाणिकी च मन्तव्या विद्वद्भिरिति विस्तरेणालम् ।

## श्रीनीलकण्ठशुक्लस्य स्फुटश्लोकाः

●

उद्गच्छद्भृङ्गमालाकुलितकमलिनीकोरकौपम्यभाजा,
वक्त्रेणाकृष्य धूमं विवलितवदना कूणिताक्षं क्षिपन्ती।
नैषा वेशाङ्गनाग्रे करधृतनलिका किन्तु कस्यापि यूनः,
प्राग्जन्मोपार्ज्यमानं परिणमति तपो धूमपानप्रधानम् ॥१

●

उदयति पिशुनेभ्यो यत्र भीतिर्न लज्जा,
प्रतिनयननिपातो नान्तरायं तनोति।
दयितजनदिदृक्षामीदृशीं पूरयन्मे,
त्वमसि पटविशेषच्छिद्रवानेव बन्धुः ॥२

●

कर्णालङ्करणं कदा कृतमिति स्पर्शः कपोले कृतः,
कीदृक् कान्तमहो !! नु कञ्चुकमिति न्यस्तः करो वक्षसि।
रागः साहजिकः किमेष वदनेऽप्यस्पर्शि बिम्बाधरो,
मौग्ध्येनैव मृगीदृशि ! व्यवसितं निर्विघ्नमासीन्मम ॥३

कान्ते ! किं कथयामि मां प्रति मनागालोकयालोकितं,
किं वाचैव न चेतसाऽपि चतुरे ! दुर्ज्ञेयमेतन्मम ।
तत्सत्यं चतुराऽस्मि यत्तव मनोवृत्तं बहिर्वर्त्तिनी,
जाने चेतसि मे स्थितस्य भवतो दुर्ज्ञेयमेतत् पुनः ॥४



गिरां देव्या मन्ये वरतनुमुखान्तः स्थितिजुषो,
वचो व्याजाद्वीणा क्वणति मनुजागोचररुचिः ।
यतस्तस्यास्तन्त्री क्षतिजनितरेखापरिचितोऽ-
धरच्छद्मा कोणः परिलसति माणिक्यघटितः ॥५



न बन्धूकं तावज्जयति न सुधाया मधुरता-
मधस्तादाधत्ते परिभवति नो पल्लवमपि ।
विशेषो नाप्येष स्फुरति परकीयाधर इह,
स्वकीयायाः कस्मादधिकमधरात् प्रेम तनुते ॥६



पटप्रान्तं मुञ्च त्वमपि यदि मुञ्चस्यपि मया,
धृतस्ते वस्त्रान्तो नहि नहि तदा मोचयसि किम् ।
प्रिये ! मानं मुक्तः स [ हि ] खलु तदैव प्रिय ! कदा,
प्रिया शब्देनासीत्तव यदपरस्यां व्यवहृतिः ॥७

पश्चान्मे गुरुसन्निधौ विधिवशादासेदुषी प्रेयसी,
तत् सन्दर्शनलालसञ्च सुतरामासीन्मदीयं मनः ।
एतस्मिन् समये तदीयवदनच्छायासनाथीकृतः,
कां प्रीतिं मम नाततान मुकुरो मत्पाणिशोभायितः ॥८



प्रस्थानावसरो मम प्रियतमे ! वाष्पः क्षणं वार्यतां,
धैर्यं चेतसि धीयतां न मिलनं यातस्य किं स्यात् पुनः ।
इत्युक्ते दयितेन नैव मिलनं यातस्य जीवस्य तु,
स्यादुक्तेति तया यथा विरचितं यः प्रस्थितः स स्थितः ॥९



प्रातर्म्लानिमुपागतं कुत इदं पद्मं प्रिये ! पद्मिनी-
बन्धावभ्युदितेऽपि पृच्छ शशिनं म्लानेर्निदानं हि यः ।
क्वासौ वक्षसि ते नवोऽयमुदितो दूरान्नतेर्भाजनं,
दृश्यः किन्तु मयैव शून्यहृदयैर्न त्वादृशैर्दृश्यते ॥१०



मध्ये जनं मुरजितः प्रणति प्रसङ्गे,
मौलौ कृताञ्जलिपुटस्य नताननस्य ।
तस्य स्मरामि सखि ! सस्मित-
मक्षिकोणं तिर्यङ् मुहुर्विवलितं मयि मानवत्याम् ॥११

यादृग् मम श्रवणसीमनि वर्तमान-
मास्वाद्यमानमपि तादृशमेव चेत् स्यात्।
पीयूषमिन्दुमुखि ! ते रदनच्छदस्य,
साम्यं समेतु सुरतावसरं विहाय ॥१२



वदनकमलमुद्यन्मन्दहासप्रचारं-
विरचयति निकारं यत्प्रसादात् सुधांशोः।
तदिदमधरबिम्बं जीवनं मीनकेतो-
र्मम वचसि विधत्तां चर्यमाधुर्यधाराः ॥१३



श्वसितमिदमकस्मादाविरास्ते कुतस्ते,
कथमिव करणीये शून्यशून्या प्रवृत्तिः।
सहचरि ! किमिदानीमेकपत्नीव्रतस्य,
क्वचन कृतिनि चक्रे पारणां चक्षुरेतत् ॥१४



स्पर्शः स्तम्भवशेन सुन्दरतनोः केनानुभूयेत ते,
कृष्णाक्ष्णोस्तव मुद्रणं न करयोः कम्पेन सम्भाव्यते।
राधामित्र ! न नेत्रमीलनविधौ योग्यो भवान् पश्य तत्,
दूरादेव निमीलखेलनमिदं गोपीवचः पातु वः ॥१५

स्मितश्रीसादृश्यं विरचयतु चन्द्रातपरुचिः;
सुधेयं वा बिम्बाधरमधुरिमाणं कलयतु ।
चमत्कारं कुर्वन् कमपि वदनात् तेऽयमुदितो,
नकारो लब्धव्यः शशिनि दयिते कुत्र कथय ॥१६



स्वप्ने दृष्टा रहसि सुतनुर्गाढमालिङ्ग्यमाना,
भूयो भूयो विनमितमुखी चुम्ब्यमाना हठेन ।
यत् साकूतं विरचितवती चेष्टितं चञ्चलाक्षी,
साक्षादेव स्फुरति तदहो !! हन्त ! निद्राक्षयेऽपि ॥१७



अन्तः स्मितोल्लासि विलोचनञ्च कौटिल्यसंसर्गजुषो गिरश्च ।
निषेधगर्भं परिरम्भणञ्च रतं तदन्यानि विडम्बनानि ॥१८



करकिशलयचाल्यमानसूर्पंक्रमनमदुन्नमदक्षिपक्ष्मपालि ।
करनिहितकनीनिकं स्मिताक्ष्याः क्षणमपिनोत्पवनं जहाति चेतः ॥१९



किसलयफलमञ्जरीर्जयन्ति द्युतिरससौरभसौरभाणि यस्य ।
विलसति दयितारदच्छदेऽस्मिन्नहह !! रसाल ! वृथा तवावतारः ॥२०

कुतुकाद् यथा यथार्यं लोकोऽनवकाशतामेति ।
यूनोर्मनसि मनोभूर्निजमवकाशं तथा तथा तनुते ॥२१

•

गमनादपि गन्तुमुद्यमस्ते प्रिय ! मां प्राणवतीन्तुदत्यतीव ।
हननादधिकं न किं तुदेयुस्तरवारेः स्फुरणानि वध्यचेतः ॥२२

•

प्रत्यग्रपथिकभावं मन्मथमार्गे प्रणीयमानानाम् ।
सुदृशामीदृग्वयसां रोदनमपि मोदनं तनुते ॥२३

•

मधुरिम्णि तन्वि ! सुधयापि कथं तुलयाम्यहं तव नकारममुम् ।
यदनुग्रहादहह !! ते मुदति स्वदतेतरामधरबिम्बमपि ॥१२४

•

मानावसानावसरं करेण नास्पर्शि बाष्पाकुलमक्षि तन्व्याः ।
नाश्रावि यैर्मा स्पृश मां शठेति तेषां गतं यौवनमेवमेव ॥२५

•

मुखकोकनदे मदालसाया मकरन्दोऽधरवेश एष मन्ये ।
चपलो युवचित्तचञ्चरीकश्चलतामेति न येन तत्र चञ्चन् ॥२६

यत्तीव्रतिग्मांशुकरः समन्तात् सम्भावितं सर्वमभूद्वियोगे।
चन्द्राननो चन्द्रिकया परीतं रात्रिंदिवं सम्प्रति वर्तते मे ॥२७



सम्भावनादौ कृतसंविभागमुपर्यवस्थं स्वतुलाय मानम्।
ओष्ठं प्रतीव स्फुटबद्धरोषो रक्तोऽधरः किं जलजेक्षणायाः ॥२८

'गोविन्दजितकृतसभ्यालङ्करणात्'



# चिमनीचरिते प्रयुक्तानां वृत्तानां लक्षणानि



मन्दाक्रान्ता —मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम् ।

१—९६

शार्दूलविक्रीडितम्—सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ।

९७

शिखरिणी —रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ।

९८—९९

हरिणी —नसमरसलागः षड्वेदैर्हयैर्हरिणी मता ।

१००

मालिनी —ननमययययुतेयं मालिनी भोगिलोकैः ।

१०१

वियोगिनी —विषमे ससजा गुरुः समे सभरालोऽथ गुरुर्वियोगिनी ।

१०२

वसन्ततिलका —उक्ता वसन्ततिलका तभजा जगौ गः ।

१०३

उपगीतिः —आर्योत्तरार्धतुल्यं प्रथमार्धमपि प्रयुक्तं चेत् ।
कामिनि ! तामुपगीतिं प्रतिभाषन्ते महाकवयः ॥

१०४—१०५

उद्गीतिः —आर्यासकलद्वितये विपरीते पुनरिहोद्गीतिः ।



# CHIMANI CARITAM
## AN STUDY
BY

Professor N. A. Gore, M. A,



Although two manuscripts of the Cimani-carita were discovered more than fifty years ago[1] and were lying in the Government Manuscripts. Library first at the Deccan College and subsequently at the Bhandarkar O. R. Institute, Poona, the work prominently came to the notice of scholars for the first time only in 1928 when Prof. P. K. Gode, M. A. wrote a short note on it in the Annals of the B. O. R. Institute, Vol. IX, pp. 331-332. In this Note he pointed out that the correct date of composition of this romantic poem was Samvat 1712 i. e. A. D. 1656, and not Samvat 1471 i.e. A. D. 1414 as suggested by Dr. Peterson who emended the words महिस्मुनीद्रद्रुमितेब्दे in the verse (No. 106) at the end of the Ms. discovered by him[2] to महींमुनींद्र. In 1941, Prof. Gode wrote another Paper[3] on

1. Catalogus Catalogorum II (1896 A. D.)—चिमनीचरित by नीलकण्ठ son of जनार्दन, Peters 4.26, Extr. 23, Rgb. 357.
2. i. e. No. 698 of A Fourth Report of Operations in search of Sk: Mss. April 1886—March 1892, By Prof. P. Peterson, Bombay 1894, p. 26.
3. In The Poona Orientalist Vol. VI (1941), pp. 149-158.

the "Historical Background of the Cimini-carita" and showed on the testimony of some inscriptions in Nasik and other Persian sources that अलहविरदीखान (verse 2 etc.) मुखलिस (66–70) and जाफर (66) mentioned in the Cimani-carita were historical personages who lived in the Seventeenth Centuary A. D. In this second Paper, Prof. Gode had announced his intention of publishing in the text of this poem in collaboration with his friend Dr. Har Datt Sharma. But unfortunately Dr. Sharma died on 11th September 1942 and the edition could not be published. After some time, Prof. Gode kindly allowed me to edit the poem and secured for me two more Mss. of it. I offer my grateful thanks to Prof. Gode for giving me the opportunity of editing this important literary work.

## MANUSCRIPT MATERIAL

This edition is based on the following four Mss. and these are the only Mss. of the work known to be extant so far.

A :—No. 3017 in the Anup Sanskrit Library, Bikaner.[1] As the Mss. in the Library are not lent out, a transcript of the original Ms. was used for this edition. Shri K. M. K. Sarma, the Curator of the Library supplies the following description of the origional Ms.—Paper; 12 folios; 10 in. × 4 in; 8 lines per page; Devanagari script; old; in good condition; fairly well-written in a large bold hand; the first and last pages left blank except the title which is written on both of them. Some

1. Catalogue of the Anup Sk. Lib., Fas. III, Bikaner, 1947, p. 225.

notes by a different hand are found. The title in an abbreviated form viz. चि. च. is written in the left hand in the margin of each page and राम in the right hand one. This Ms. was copied in Samvat 1726 i. e. A. D: 1669-1670 i.e. within fifteen years after the date of composition of the Poem.

B:—1 Govt. Collection of Mss. at the Bhandarkar O. R. Institute, No. 357 of 1884-1887. The Ms. is thus described by Dr. Bhandarkar: —[ Paper ]. No. 357. चिमनी-चरित नीलकण्ठ. 8 leaves, 27 lines. on each page. 17 letters in each line. Samvat 1764 [i. e. A. D. 1707-1708] complete Continuous with अमरुशतक, No. 320. An interesting feature of this Ms. is that unlike the generality of Mss. it is written breadthwise.

C:—2 Govt. collection of Mss. at the B.O.R. Institute, No. 698 of 1886-1892. According to Dr. Peterson's description it consists of 10 folios : 16 lines per page and 40 letters in a line. Samvat 1800 [i. e. 1743-1744 A. D.] भावनाविलास in Hindi of हेमराज is the other work in this Ms.

D :—Nathadvara Ms. I have used only a transcript of this Ms. No description of the Ms. is available to me.

---

1. Report on the search for Sk. Mss. in the Bom. Pres. during 1884-1887, by Dr. R. G. Bhandarkar, Bombay, 1887, p. 50.
2. A Fourth Report of Operations in search of Sk. Mss.—April 1886-March 1892. By Prof. P. Peterson Bombay, 1894, p. 26.

## GROUPING OF MSS.

A careful study of these four Mss. would reveal that they fall into two groups viz. A. C; and B, D[1], Though a Ms. in one group at times agrees with those in the other, e. g. वांग—B, C. D. against बांग of A (39), सीत्कृति—A, B against सीत्कृतं of C, D (8), प्रापवृद्धि–B, C, D against प्रापद्वृद्धि of A (76), the agreement does not disturb the grouping made above.

## THE STORY

A muslim nobleman named 'Mukhalisa' had a daughter 'Cimani' by name. He gave her in marriage to 'Japhara' the eldest son of his younger brother 'Alahaviradikhana'. A very handsome young Brahmin named 'Dayadevasarman' came to Alahaviradikhana and remained as his protege and was given the work of imparting instruction to the young maidens in the harem like Manika and other, and to prevent the growth of

---

| 1. Eg. A, C. | B, D. | No. of stanza |
|---|---|---|
| मिलनं | चरितं | 6 a |
| आस्यैः (16)ताभिः (17) | ताभिः (16)आस्ये :(17) | i. e. transposition of two verses. |
| ज्यौत्स्ना, ज्योत्स्नी | ज्योत्स्ना | 29 b |
| दर्शं दर्शं | दृष्ट्वा दृष्ट्वा | 41 d |
| किं चैतस्मिन्निखिल | किं त्वेतस्मिन्नखिल | 49 c |
| कथमपि तया | कथमपि तुला | 52 c |
| नान्यो | मन्ये | 74 a |
| विप्रा | विप्रो | 87 d |
| ज्ञानं सर्वं | सर्वं ज्ञानं | 90 d |
| रसाश्रयं | रसाश्रितं | 102 c |

undesirable intimacy between the teacher and his fair pupils, one 'Anisa' was appointed to keep watch ever them. But in spite of him, the ladies came under the influence of the charm of their teacher's attractive personality and resorted to various ruses to attract his attention and to get the pleasure of the touch of his hand. Verses 7–15 graphically describe why this tution was bound to fail and verses 16–50 vividly bring out the suffering of the ladies during separation at night from their handsome teacher and their longing to meet him the next day.

One day Cimani happened to look at Dayadeva from the window of her mansion and she too fell in love with him. With the help of Anisa who was a willing go–between she secured the 'pravaraka' or the upper–garment of Dayadeva and Manika also agreed to help her and handed over to Dayadeva the betal containing four pearls which Cimani gave her for him. Having come to know from Manika Cimani's ardent love for himself, Dayadeva, on his part, gave her a necklace of beads of Amber for being conveyed to his beloved. Cimani then managed to meet Dayadeva in the house of Anisa and this was a prelude of many such meetings between these young lovers who cared not for the difference of their religious, inequality of their worldly position or the illegitimacy of their love

## APPRECIATON

As this summary will show, the story is a simple one and it develops without a clash of interests or a conflict of contrasted wills. It is a recital of a secret love-affair between the

तद्विरोधित्वाच्च, एवं साधारणीकरणेन भावकत्वनिवृत्तौ तृतीयस्य भोगकर्तृत्वव्यापारस्य प्रभावात् रजस्तमसोरभिभवे सत्वोद्रेके च प्रकाशमाना आनन्दमयी या संवित् तत्र विगलितवेद्यान्तरत्वेन स्थितिरूपा या विश्रान्तिस्तत्स्वरूपेण साक्षात्कारेण विषयीक्रियमाणो रत्यादि स्थायीभावो रसः स्थायिनो भावकत्वव्यापारेण साधारणीकृतत्वात् सत्वादीनां त्रयाणामुद्रेके सुखदुःखमोहाः क्रमात् प्रकाशन्ते। उद्रेकश्च स्वेतरद्वयाऽभिभवः, इति साङ्ख्यसिद्धातानुसारं व्याख्यातवान्

अत्रापि काचिदरुचिः—तथाहि भावकत्वव्यापारेण भाव्यमानेषु विभावादिषु समुदीर्णे तदास्वादे कुतो व्यापारान्तरोपलब्धिः?। एकेनैव व्यापारेण कार्यसिद्धेः स्वसंवेदनसिद्धत्वात्। अन्यच्च सत्वोद्रेकादिविशिष्टतथाविधाऽनुभवकल्पने किञ्चित् प्रमाणं नास्ति। बीभत्सरौद्रादीनां रसत्वे च का व्यवस्था स्यादिति मत भेददपि न विचारसहम्। एवम्पूर्वमतान्यालोच्य श्रीमद्भिरभिनवगुप्तपादाचार्यैर्व्यञ्जनाव्यापारविधया रसस्वरूपनिष्पत्तिरुपपाद्यते। तद्यथा—

लोके कटाक्षादौ रतिव्याप्यत्वज्ञानवतां सामाजिकानामन्तःकरेण वासनारूपतया रत्यादि प्रत्यवतिष्ठते स स्थायी। लोके रत्यादिकारणानि प्रमदादीनि, तत् कार्याणि कटाक्षादीनि, निर्वेदादीनि च सहकारीणि। तेषामेव काव्यादौ क्रमेण विभावानुभाव-व्यभिचारिशब्दै र्व्यवहारः। न चैवं नामभेदमात्रमकिञ्चित्करमितिवाच्यम्। विभावन-अनुभावन-सञ्चारणव्यापारभेदस्वीकारात्। तेषाञ्च ईषत्स्फुट, स्फुट, स्फुटतरप्रकाशरूपत्वात्। यदुक्तम्—

> विभावा अनुभावाश्च तथैव व्यभिचारिणः।
> प्रतीयमाना प्रथमं खण्डशो यान्त्यखण्डताम्॥

लोके सम्बन्धिविशेषोमत्वेन गृह्यमाणे कान्तादौ कटाक्षादिलिङ्गकरत्यनुमितौ न चमत्कारः, काव्यादौ वाक्यार्थबोधान्तरं चमत्कारविशेष इत्यनुभवसिद्धत्वात्। एतेन शकुनालापादीनां सामाजिकैरससम्बन्धात् कथं तेभ्यो रसोद्बोध इति निरस्तम्। काव्यादौ तेषाँ साधाराणीकरणमिति स्वीकारात्। 'ता एव परिहृतविशेषा रसहेतवः' इति सूत्रकारोक्तिश्च। एवं हि स्थायिनोऽपि तद्बोध्यम्। प्रमातृविशेषनिष्ठत्वेन प्रतीयमानस्वरूपपरिमितत्वे रसस्वरूपानुपपत्तिः। स्वगतत्वेन रसादि-

प्रतीतौ सभ्यानां व्रीडाभयाद्यापत्तेः। परगतत्वेन अनास्वाद्यत्वप्रसङ्गः। अतः साधारणीकरणव्यापारस्वीकारेणैव सर्वदोषपरिहारः शक्यः।

एवञ्च सति विभावादिभिः स्थायिनि अभिव्यज्यमाने चैतन्यानन्दस्वरूप आत्मा भासते। वेदान्तिमते ज्ञानमात्रे तद्भानस्वीकारात्। न च घटादिज्ञानेऽप्यानन्दोद्बोधापत्तिरिति वाच्यम्। तत्र आनन्दांशे आवरणभङ्गाभावात्। अत्र सहृदयविशेषस्यैव तद्भङ्गहेतुत्वात्। तथा च रत्याद्यवच्छिन्नं चैतन्यमावरणभङ्गादानन्दरूपतया प्रकाशमानं रसपदार्थः। विभावादिचर्वणाया रसव्यञ्जकत्वात् तन्निष्ठयोः आवरणभङ्गनिष्ठयोर्वा उत्पत्तिविनाशयोः आरोपात्, रस उत्पन्नो रसो नष्ट इत्यादि व्यवहारः। चैतन्यस्याऽऽत्मरूपतया उत्पत्तिविनाशाऽनर्हत्वात्, चर्वणानिवृत्तौ च प्रकाशस्य आवृतत्वात् विद्यमानोऽपि स्थायी न प्रकाशते। अतएवोक्तं काव्यप्रकाशे—विभावादि जीवितावधिः इति। चर्वणातु आवरणभङ्गः रत्याद्याकारान्तःकरणवृत्तिविशेषो वा। चर्वणा च पानकरसन्यायेन—

यथोक्तम्—प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते।
ततः सम्मिलितः सर्वो विभावादिः सचेतसाम्॥
प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत्।

स चाऽयं रसो न कार्यः, विभावादिज्ञाननाशेऽपि रसानुभवप्रसङ्गात्। निमित्तनाशे कार्यनाशस्याऽनङ्गीकारात्। रत्याद्यवच्छिन्न चैतन्यस्यैव रसत्वात्, चैतन्यस्य कार्यत्वशङ्कातङ्काराहित्यात्। नाऽपि ज्ञाप्योऽयं रसः, विभावादिजन्याभिव्यक्तिविशिष्टरसादेरेव सत्वात्। तस्य च विभावादिव्यक्तिपूर्वमसमत्वात्। पूर्वसत्त एव घटादेः पदार्थस्य आलोकादिनाऽभिव्यक्तिदर्शनात्।

तद्ग्राहकं न निर्विकल्पं, विभावादिपरामर्शस्य तद्विषयकनिर्विकल्पकज्ञानजननाऽयोग्यत्वात्। निर्विकल्पकस्य जन्यज्ञानाऽजन्यत्वनियमात्। नाऽपि तद्ग्राहकं सविकल्पकं विभावादिसमूहालम्बनस्य रसत्वात्तेषां सम्बन्धग्रहाभावात्। इदञ्च युक्तायोगिज्ञानाद् विलक्षणं तस्य सन्मात्रविषयकत्वात्, अस्य च गुणालङ्काराद्यधिकविषयत्वात्। युञ्जानयोगिज्ञानादपि तथा तस्य भेदावगाहित्वात्। लौकिक रत्यादिज्ञानादपि भिन्नमेव, अस्य गुणालङ्काराद्युपस्कृतशब्दार्थसंवेदनविषयत्वात्।

ननु उभयग्राह्यत्वनिषेधे ग्राह्यत्वमेव न स्यात् उतापि न वाच्यम् । अस्या अभिव्यक्ते- र्लोकोत्तरत्वात्, सकलसहृदय-हृदयानुभवप्रमाणकत्वाच्च । यदुक्तम्—

"तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम्"

अत्र रसगङ्गाधरकारः—'इत्थञ्च अभिनवगुप्तमम्मटभट्टादिग्रन्थस्वारस्येन भग्नावरणचिद् विशिष्टो रत्यादिः स्थायीभावो रस इति स्थितावस्तुतस्तु वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः । सर्वथैव चास्या विशिष्टात्मनो विशेषणं विशेष्यं वा चिदंशमादाय नित्यत्वं स्वप्रकाशत्वञ्च सिद्धम् । रत्याद्यंशमादाय त्वनित्यत्वमितरभास्यत्वञ्च ।' इति यदूचिवान् तत् वेदान्तमताभिनिवेशेन । अभिनवगुप्तपादाचार्यास्तु शिवाद्वैतसिद्धान्तानुसारिण 'चैतन्यमात्मा' इति शिवसूत्रानुदसारेण रत्याद्यंशेऽपिचिद्रूपताङ्गीकुर्वन्तीति प्रतिभाति । यतस्तन्मते जडो नाम कश्चिन्नास्येव पदार्थः साधारणीकरणव्यापारमहिम्नाऽपरिच्छिन्नस्य आनन्द- मयस्वरूपस्यैवोपलब्धिः सा च पूर्णाऽहंभावरूपा । अपूर्णतैव क्लेशहेतुः । यदुक्तम्—

पूर्णत्वादहमित्यन्तर्ज्ञानमानन्द उच्यते ।

एतदभिप्रायेणैव—काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ।।

इति श्लोकव्याख्याने तैरेवं प्रतिपाद्यते—'क्रौञ्च द्वन्द्वबियोगेन सहचरीहननोद्भूतेन साहचर्य्यध्वंसनेन्न उत्थितो यः शोकः स्थायिभावो निरपेक्षभावत्वात् विप्रलम्भशृंङ्गारोचितःथायिभावादन्य एव । स एव तथाभूतविभावतदुत्थाक्रन्दाद्यनुभावचर्वणया हृदयसंवादतन्मयीभवनक्रमादास्वाद्यमानतां प्रतिपन्नो रसः परिपूर्णकुम्भोच्छलनवत् चित्तवृत्तिनिस्पन्दवाग्विलापादिसमयानपेक्षित्वेऽपि चित्तवृत्तिव्यञ्जकत्वादिनयेनाऽकृतकतथैव आवेशवशात्समुचितछन्दोवृत्तादिनियन्त्रितश्लोकरुपतां प्राप्तः 'मा निषादेत्यादि' । न तु मुनेः शोक इति मन्तव्यम् । एवं हि सति तद्दुःखेन सोऽपिदुःखित इति कृत्वा रसस्यात्मतेति निरवकाशं भवेत्' इति, ।

न च प्रतिकूलवेदनीयतया दुःखरुपत्वात्करुणादीनां रसानां न रसत्वमित्याशङ्कनीयं, सुखमयत्वस्य सहृदयहृदयानुभवसाक्षिकत्वात् । एवमेव वीभत्सभयानकादिष्वप्युपपत्तिः । लोके जुगुप्स्य-भयजनकवस्तुषु स्वारसिकी प्रवृत्तिर्न भवति, काव्य-

नाट्योपस्थापितेषु कविकौशलाद् विभावत्वाद्यापन्नेषु तेषु साभिनिवेशं प्रवृत्तिर्भवत्वेवेति फलबलात्सर्वेषां रसानां सुखमयत्वस्वीकारे न कोऽपि प्रतिबन्ध । स्तम्भकम्पाश्रुपातादीनां तत्तच्चित्तवृत्तिप्रयोज्यतया शृङ्गारादिवत् करुणभयानकादिष्वपि स्थिति र्न विरुद्धा ।

अत्रेदमवधेयम्—लौकिकाः शोकहर्षादयो लोके स्वानुगुणमेव कार्यं जनयन्तीति प्रसिद्धम् । परं काव्यव्यवहारे कविप्रतिभादर्पणे प्रतिबिम्बिताः सर्वेऽपि भावाः सुखमेव जनयन्ति, कविप्रतिभायाः सुखजनकताया धर्मिग्राहकमानसिद्धत्वात् । इदमस्माभिः पारमार्थिकादिविलक्षणं किमपि प्रातिबिम्बिकं सत्यमिति व्यपदेष्टुं शक्यम् । यदुक्तम्—

कविशक्त्यर्पिता भावास्तन्मयीभावयुक्तितः ।
यथा स्फुरन्त्यमी काव्यान्त तथाऽध्यक्षतः किल ।

एतदभिप्रायेण महार्थमञ्जर्यां महेश्वरानन्देन—

हन्त मुखं प्रतिबिम्बतु प्रतिबिम्बयतु तथा तदपि दर्पणः ।
दर्पणः पुनर्यस्मिन् प्रतिबिम्बति सोऽपि ज्ञातव्यः ।

इति स्वकारिकाव्याख्यायां परमेश्वरस्वातन्त्र्यलक्षणं प्रतिबिम्बवादं विवृण्वता एवं प्रतिपाद्यते—'तेन च सर्वोऽयमादर्शाननाद्युपलक्षितः स्तम्भकुम्भादिर्वेद्यविस्तारो मालिन्यकक्ष्यानुप्रवेशितान्यपदार्थवैमल्ये स्वच्छत्वोत्कर्षशालिनि स्वस्वभावाऽविभिन्नपरमेश्वरात्मके महति मुकुर-मण्डले तन्मयत्वपर्यायया प्रतिबिम्बनयुक्त्या परिस्फुरतीति तात्पर्यार्थः' इति । एवमग्रेऽपि—एवञ्च बाह्येषु दर्पणादिषु बिम्बसव्यपेक्षः प्रतिबिम्बोपलम्भः । स्वात्मरूपे पुनरेतद्वैपरीत्यम् । अशेषस्यापि विश्ववैचित्र्यस्य प्रतिबिम्बतयाऽनुभूयमानत्वात् । एतच्च परमेश्वरस्वातन्त्र्यशक्तिविजृम्भितवशादुपपद्यते । एतदेव तत्त्वं श्रीशङ्करभगवत्पादैरपि 'विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं, पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया' । इत्याद्युक्तिभिर्दक्षिणामूर्तिस्तवे निरूपितम् । एतावतारसास्वादनिष्कर्षः, निरवच्छिन्नसच्चिदानन्दमूर्तेः परमेश्वरस्य स्वात्मा भेदेनाऽनुभव एवेति कथने न काप्यतिशयोक्तिः । अत एवोच्यते—

'पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम्' । इति'

इत्थमाचार्याभिनवगुप्तपादानां सरण्या दिङ्मात्रेण रसो वर्णितः । रसगङ्गाधरादिप्रबन्धेषु रसविषये कानिचिदन्यान्यपि मतान्युपलभ्यन्ते । तत्र दिङ्मात्रेण किञ्चिदुपस्थाप्यन्ते—

केचननव्याः—'काव्यनाट्ययोः प्रकाशितेषु विभावादिषु व्यञ्जनाव्यापारेण तत्तद्रतिमत्ताज्ञानं ततश्च सहृदयतोल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितदुष्यन्तत्वावच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकाशकलइव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यशकुन्तलादिविषयकरत्यादिरेव रसः' इत्याहुः । एतन्मते व्यञ्जनाव्यापारो, दोषविशेषः, अनिर्वचनीयख्यातिश्चेति पदार्थत्रयम् । एतदपि विचार्यमाणं सिद्धान्तदृष्टया गौरवग्रस्तमेव, व्यञ्जनाव्यापारस्यैव सकलभरसहत्वात् । परे तु केचन प्रागुक्तदोषमहिम्ना सर्वोऽपि रसास्वादप्रकारः पर्यवस्यतीति प्रतिपादयन्ति ।

एतदपि विचारकक्षां नाऽधिरोहति । तथाहि रसविषयकानुभवस्य दोषरूपतायां तस्योत्तरज्ञाननाश्यत्वप्रसङ्गः, स च नास्ति । न च कश्चित्सहृदयो 'भ्रान्तोऽहमभूव' मिति प्रतिपद्यते । पौनः पुन्येन रमणीयकाव्यपरिशीलनप्रवृत्तिश्च व्याहन्येत । केचित्तु-एकैकस्माद् विभावादे रसानुभव इति व्याचक्षते, तदपि न समीचीनं, सम्मिलितानामेवाऽऽस्वादजनकतायाः सूत्रे मुनिना स्वीकृतत्वात् । अत्र रसप्रदीपकारस्यैतानिष्कृष्टार्थसूचिका कारिकाः परिशीलनीयाः—

अलौकिकः परब्रह्मसंवेदनसहोदरः
रसोऽयमिह संवित्तेरन्यन्मानमपार्थकम् ॥
वस्तुतस्तु न रत्यादौ रसत्वं कारणादि च ।
विभावत्वादितामेति किन्तु तन्मयभावतः ॥
सामाजिकानां जायन्ते ये तदाकारसुन्दरा ॥
चित्तवृत्तिविशेषास्ते विभावत्वाद्यलौकिकम् ॥
रूपं भजन्ते तदनु सकलाकारसुन्दराः ।
एका विलक्षणा चित्तवृत्तिर्या जायते सताम् ॥
रसःनात्मा रसः सैव शङ्काशूकनिवारिता ।

इति ब्रूमो वयं त्वत्र तदिदं मत्सरं विना ॥
विचारणीयं रसिकैरिति सर्वं समञ्जसम् ॥ इति ॥

तदेवं निरूपितस्य काव्यजीवानुभूतस्य रसस्यापि भावाभ्यां भेदमुपकल्प्य विविधान् रसभेदान् उदाहरन्ति ग्रन्थकाराः । केचित्तु तत्तद्विशिष्टैकरसप्राधान्यवादिनोऽपि व्यवतिष्ठन्ते ।

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥

इति प्रसिद्धैव कारिका । शान्तोऽपिनवमोरसः केवलं काव्येष्वेव न पुनर्नाट्ये सम्भवति, सर्वावस्थाविरागरूपस्य तस्याऽभिनेतुमशक्यत्वादिति, केचित् -

शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात् ।
अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते ॥

इति तेषां सरणिः । तदपरे न क्षमन्ते—यतः शमाभावदिति हेतुरसङ्गतः, रत्यादेरपि नटे असत्वात्, स्थायिभावस्य सामाजिकनिष्ठत्वात् । इत्यादिवत्, शमस्य निर्वेदस्य का स्थितिरुपकल्पनीया । अवस्थानुकृतिरूपे नाट्ये रत्याद्यनुभाववत्, शमानुभावानामप्यभिनये नाऽस्ति किमपि बाधकम् । वयन्तु ब्रूमः—सर्वावस्थाविरामरूपः शमस्तु परमयोगिमात्रनिष्ठस्तस्य नाऽत्रावसरः । इह कविसंसारे विषयेभ्यो व्यावर्तमानस्य पुरुषस्य लग्नाऽलग्नप्रायचित्तवृत्तेर्यो भावः एव निर्वेदपदाभिधेयो भवति । अतएव 'अहौ वा हारे वा कुसुमशयने वा दृषदि वा' इति सुप्रसिद्धे तदुदाहरणे व्यावर्त्यानां विषयाणामेवाऽऽलम्बनरूपता दृश्यते, एवमेव गुरूपदेश–सत्कथा–तीर्थाटनप्रभृतीनां विषयविशेषाणां तत्र यथोचितमुपयोगादास्वादजनकत्वमस्त्येव । तस्मान्नाट्येऽपि शान्तरसस्थिति र्न विरुद्धा यदुक्तं सङ्गीतरत्नाकरे—

अष्टावेव रसा नाट्येष्विति केचिदचूचुदन् ।
तदचारु यतः कञ्चिन्न रसं स्वदते नटः ॥

केचित्तु सर्वरसोद्भावकतया शान्तस्य प्रधानरसत्वमातिष्ठन्ते । यथा—

स्वं स्वं निमित्तमासाद्य शान्तादुत्पद्यते रसः।
पुनर्निमित्तापाये तु तत्रैव प्रविलीयते ॥

भोजराजः शृङ्गारप्रकाशे—'वयन्तु शृङ्गारमेव रसनाद्रसभागनामः'। इति सर्वजनसंवेद्यतया रागतत्वस्य प्राधान्याच्च शृङ्गारैकरस प्राधान्यवादं व्यवस्थापयति।

रसे सारश्चमत्कारः सर्वत्राऽप्यनुभूयते।
तच्चमत्कारसारत्वे सर्वत्राऽप्यद्भुतो रसः॥
तस्मादद्भुतमेवाऽऽहकृतीनारायणो रसम्।

इति साहित्यदर्पणे नारायणस्य मतमालोक्यते। चमत्कारो नवोन्मेषशालि प्रतिभाधर्मः स एव काव्ये रसरूपतया गृह्यते। एवं चमत्कारचन्द्रिकाकारप्रभृतयोऽप्याहुः। केचन वत्सलरसं पुत्राद्यालम्बनमूचुः। यथा—

स्फुटं चमत्कारितया वत्सलञ्च रसं विदुः।
स्थायी वत्सलता स्नेहः पुत्राद्यालम्बनं मतम् ॥ इति।

भवभूतेः प्रसिद्ध एव श्लोकः—

एको रसः करुण एव निमित्तभेदाद्
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान् विकारान्
अम्भो यथा सलिलमेव हि तत्समस्तम् ॥

करुणस्यैवं विवर्तभूता अन्य रसाः। मूलभूतस्त्वेकोऽयमेवेति तस्याऽयमभिप्रायो रामायणोद्गममूलभूतस्य वाल्मीकेः 'मा निषाद प्रतिष्ठां वमगमः शाश्वतीः समाः' इत्यादि पद्यप्रणयनव्यापारस्याऽनुगामी। एवं भक्तिरसेऽपि मधुसूदन सरस्वती प्रभृतीनामन्येषांमाचार्याणां महान् प्रयासो रसत्वव्यवस्थायै दृश्यते। अभिननवगुप्तपादप्रभृतयस्तु परमास्तिका रसं पृथङ्नाङ्गीकुर्वन्ति। तत्रेदं तत्वं प्रतिभाति-लौकिकेभ्य एव कारणादिभ्यः काव्यव्यापाराद् विभावाद्यवस्थां प्रतिपन्नेभ्यो रसानुकूलचित्तवृत्तेरुद्गम इति सिद्धान्तः, भक्तिरसे तु आलम्बनमेव अलौकिकमिति रसलक्षणे तन्निवेशो न भवतीति तेषामभिप्रायः। यत्तु अप्राकृतो भक्तिरसः, प्राकृतास्तु शृङ्गारादयस्तदङ्गभूता इति केषाञ्चिद्दर्शनं, तदतीव

शङ्काकलङ्कसङ्कुचितम् यतो रसत्वे प्राकृताऽप्राकृतविभाग एव न सम्भवति, तस्य परमानन्दघनस्वभावतया विगलितवेद्यान्तरतया सङ्कोचानर्हत्वात् । अतएवेयमुक्तिरपि प्रसिद्धा पर्यालोचनीया—

वीणावादनतत्वज्ञः स्वरशास्त्रविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति । इति

रसदर्शनेऽस्मिन् भरतमुनेरेव वचनस्यमान्यतया तदुक्तदिशैव रससङ्ख्या साधीयसीति प्राचामाचार्याणां व्यवस्था । इत्थं सङ्क्षेपेण यथामति विचारितो रसस्य मार्गः । इदानीं उदाहरणदिशा किञ्चिदालोच्य विषयोऽयमुपसंहरिष्यते । कुमारसम्भवे कविकुलगुरोः शिवपार्वत्योः परस्परालोकनप्रसङ्गे काव्यचमत्कारः समास्वाद्यताम्—

हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामासविलोचनानि ॥
विवृण्वती शैलसुताऽपिभावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥

अत्र भगवतोः प्रथमप्रणयप्रसङ्गः कमनीयशब्दार्थसमर्पितविभावाद्याभिव्यक्तारसनिस्यन्दः सहृदयैरनुभूयते । अम्बुराशिरिवनिसीममाहात्म्यस्याऽपि भगवतो हृदि पूर्णेन्दोरिव प्रणयबिम्बस्य समुदये क्षोभः साहजिकतया निरूपितः कविना । उमामुखविशेषणबलात् स्पृहणीयत्वाऽभिव्यक्त्या लोचनत्रयास्याऽपि व्यापारितत्वोक्त्या च बलवदनुरागोद्भेदःसूचितः । यद्यपि विलोचनव्यापारणं परिचुम्बनाभिलाषो वेति एकतरनिर्णयाभावात्सन्दिग्धप्राधान्यं व्यङ्ग्यमत्राऽऽमनन्ति केचित्, परमनुरागोत्कर्षाऽभिव्यक्त्या तदास्वादो न हीयते ।

एवमेवकदम्बमुकुलन्यायाद्रोमाञ्चिताङ्गी विनमितविलोचना साचीकृतवदनारविन्दा पार्वती स्वान्तस्थमनुरागमभिव्यञ्जयन्ती समुल्लिखिता कविना चारुतरेण इति मुखविशेषणात् साचीकरणेऽपिहर्षाद्यभिव्यञ्जकत्वं मुखस्य प्रतीयते । एवमत्र परस्परालम्बनो रतिस्थायिभावः समुचितविभावादिसामग्रीलब्ध-

परिपोषः सद्यः सुधियां समास्वाद्यतामभ्युपैति। अलङ्कारकल्पनाऽपि सुतरां रसानुसारिणी तत्परिपोषायैव प्रकल्पते। पर्यन्ते मामकमेकं चन्द्रान्योक्तिपद्यं भगवते निवेदयन् विरमामि—

शापक्षीणकलेवरोऽपि कुटिलाकारोऽपि मारोद्यमं
कुर्वाणोऽपि कलङ्कमङ्कमिलितं नित्यं दधानोऽपि यत्!
मूर्ध्नि स्वे निहितोऽसि विश्वगुरुणा त्वं कर्मणां साक्षिणा
शीतांशो! कथय त्वया तदतुलं किं नाम तप्तं तपः॥

## पण्डितराजस्य गर्वोक्तिः

आमूलाद्रत्नसानोर्मलयवलयितादा च कूलात्पयोधे-
र्यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु।
मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां,
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः।



गिरां देवी वीणागुणरणनहीनादरकरा, यदीयानां
वाचाममृतमयमाचामति रसम्।
वचस्तस्याकर्ण्यं श्रवणसुभगं पण्डितपते-
रधुन्वन्मूर्धानं नृपशुरथवाऽयं पशुपतिः।

# कालिदासदृष्टौ ललनामार्दवम्

श्रीरमाशङ्कर मिश्रः

अथातो ललना-मार्दवानुशासनं कालिदास-दृष्टौ ! तस्यै नम उज्जयिन्यै निखिल-लोकललाम-ललना-लावण्य-जयिन्यै; यत्र मन्ये गिरिजालिङ्गितार्धदेहं रमेश्वरं पूजयितु-कामानां काञ्ची-कङ्कण-मञ्जीर-मञ्जु-शिञ्जित-रञ्जित-जन-कामानां वामानां वामाक्षि-कटाक्ष-पातैर्वर्धित-रस-विलासः कालिदासः स्वकाव्येषु विततान ललना-मार्दवं नु ! निपीयतामेकमपरमपि 'कादम्बरी-पानकं' विद्वत्तल्लजैः 'अन्तराष्ट्रिय-महिला-वर्षं सहर्षं मानयद्भिः ! यद्यपि जागतिक-प्रपञ्च-मञ्चमञ्चति वैरिञ्च-पाणि-पद्म-परागानुराग-रञ्जितेऽस्मिन् देव-दानव-मानव-निकरे ललनानां ललित-लालित्य-लालितं मधुर-माधुर्य्य-मेदुरितञ्च मृदुल-मार्दवं सनातन-कालत एव समपेक्ष्यते स्म सादरमेव; तथापि नव-नव-पल्लवोल्ललित-कल्पपादप-वल्लरी-सन्निभ-कल्पना-प्रकल्पनैक-शिल्पिनो ललना-मार्दवैक-पक्षपातिनो महाकवि-कालिदासस्य विविधान् वाग्-वैभव-विलासान् तदीय-काव्य-कुसुमाकरे दिदृक्षतेऽयं विचक्षण-चय-चरण-धूली-धवलित-भाल-भागः ।

- ऋतु-संहारे – कवि-कुल-कुमुद-कलाधरेण कालिदासेन ऋतु-संहाराभिधे प्रथम-खण्डकाव्ये 'योग्यं योग्येन योजयेदिति' लोक-नीतिमाकलयता ललनानां मार्दवानुरूपमेव क्वचन (ग्रीष्म-काले) प्रसरच्चन्द्रिका-चमत्कृत-विभावरी-विभावनं 'विचित्रं जलयन्त्र-मन्दिरं' मणि-कदम्बकं, सरसं चन्दनं', 'मदन-दीपनं' वीणा-गुणानुरणन-समुपलालितं गीतम्, 'उच्छ्वास-विकम्पितं मधु', सौरभाकुलं 'मनोहरं हर्म्यतलं' समुपायनीकृतम् । प्रस्तुतेषु तेषु तेषु मार्दव-सम्भार-भारेषु—

'नितम्ब-बिम्बैः सदुकूल-मेखलैः, स्तनैः सहाराभरणैः सचन्दनैः ।
शिरोरुहैः स्नान-कषाय-वासितैः, स्त्रियो निदाघं शमयन्ति कामिनाम् ॥'

क्वचन च लाक्षारस-रागानुरञ्जितैः 'हंसरुतानुकारिभिः सनूपुरैः' कामिनी-चरणैः जनचित्तं समन्मथीकृतम्। क्वचन सचन्दनाम्बु-व्यजनोद्भवानिलैर्मन्मथो वीज्यते। क्वचिच्च 'सितेषु हर्म्येषु' सुख-प्रसुप्तानि वनितावदनारविन्दानि विलोक्य लज्जा-पाण्डुतामिव समाटीकते शीतदीधितिः। क्वचित्तु विलासिनीनां विलास-विलसितं सस्मित-कुटिल-कटाक्ष-पक्ष-निक्षेपणं विभातितराम्। अहो! प्रावृषि प्रवासिनामपि वियोग-रोग-दूना विलासिन्यो न विजहति मार्दवं नाम! :—

विलोचनेन्दीवर-वारि बिन्दुभि—
र्निषिक्त-बिम्बाधर-चारु-पल्लवाः।'

क्वचन कटितटावलम्बिनः केशजालाः कुसुम-सज्जिताः, सहाराः पयोधराः मधुमद-मण्डितानि मुख-नलिनानि रतिं जनेषु जनयन्ति। क्वचन च कालागुरु-चन्दन-चर्चिताः, कदम्ब-केसर-केतकी-कुन्द-ककुभ-कुमुद-कुसुममाला-शालिन्यो लसन्ति नार्यः। क्वचिच्च जलदकालः कान्त इव कामिनीनां केश-पाशे मालती-परिचुम्बितां बकुल-कुल-मालां रचयति, विरचयति च कर्णयोः विकच-कदम्ब-रचितं कर्णपूरम्! अथ सद्य एव लोचन-गोचरतामुपैति सहृदयानाम् :—

काशांशुका विकच-पद्म-मनोज्ञ-वक्त्रा
सोन्माद-हंस नवनूपुर-नाद-रम्या।
आपक्व-शालि-रुचिरा तनु-गात्र-यष्टिः
प्राप्ता शरन् नववधूरिव रूप-रम्या॥"

हेमन्ते न केवलं रति-समारम्भे, रतावसानेऽपि ललनासु मार्दवं नरीनर्ति सकौतुकम् :—

"काचिद् विभूषयति दर्पण-सक्त-हस्ता
बालातपेषु वनिता वदनारविन्दम्।

दन्तच्छदं प्रियतमेन निपीत-सारं
दन्ताग्रभिन्नमवकृष्य निरीक्षते च ॥"

"अन्या प्रियेण परिभुक्तमवेक्ष्य गात्रं
हर्षान्विता विरचिताधर-चारु-शोभा ।
कूर्पासकं परिदधाति नख-क्षतांगी
व्यालम्बि-नील-ललितालक-कुञ्चिताक्षी ॥"

शिशिरर्तौ च दुस्सह-शैत्य-प्रभाव- कम्पमानाधर-पल्लवानां सुन्दरीणां पुनरपि निपीयतां मार्दव-मद्यम् —

'अगुरु-सुरभि-धूपामोदितं केशपाशं
गलित-कुसुम-मालं तन्वती कुञ्चिताग्रम् ।
त्यजति गुरु-नितम्बा भिन्न-मध्यावसाना
उषसि शयनमन्या कामिनी चारु-शोभा ।।"

अथ च कामिनीजन-सर्वस्वभूते मधुमासे तु किमु सूचनीयं ललनानां मार्दव-विषयमधिकृत्य, यत्र मधु-सखोमदन एव प्रमदासु निवेशयति लालित्यम् :—

'अङ्गानि निद्रालस-विभ्रमाणि, वाक्यानि किंचिन्मद-लालसानि ।
भ्रूक्षेप जिह्मानि च वीक्षितानि, चकार कामः प्रमदा-जनानाम् ॥

इत्थञ्च ऋतु-संहारे कवि-गुरुर्ललनासु न मार्दवादन्यद् द्रष्टुमीहते ! साम्प्रतं समास्वाद्यतां मेघदूताख्ये खण्डकाव्ये रस-निर्भर-भर-विजृम्भितो वनिता-म्रदिमा परिगत-महिमा ।

मेघदूते—न केवलं ललनानां शारीरमेव (बाह्यमेव) मार्दवम्, अपि तु मानसमपि कुसुम-कोमलत्वं निदर्शयन्नाह कवि-शेखरः :—

"आशाबन्धः कुसुम-सदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयिहृदयं विप्रयोगे रुणद्धि ॥"

कवि-परिष्कृतायाम् उज्जयिन्यामपि पौराङ्गनानां विद्युद्दाम-स्फुरित-चकितेषु लोलापाङ्गेषु लालित्यं मार्दवानुगतं प्रसिद्धमेव । अतएव मृदुलाङ्गनानां सुरत-

ग्लानेरपनोदनाय अङ्गानुकूलं शिप्रा-वातं प्रेरयति कवीन्द्रः। वनिता-पाद-रागाङ्कितेषु उज्जयिनी-हर्म्येषु मेघं सोत्कण्ठीकुर्वताऽपि कविना कृतमेव मार्दव-रक्षणम्! विलास-विकम्पितैः पादन्यासैः क्वणित-मेखलानां चामरान्दोलिनीनां वेश्यानामपि क्लान्त-हस्तीकरणं नूनं कवि-कौतुकमेव! एवमेव कान्त-सदनं गच्छन्तीनां विलासिनीनां कृते सौदामिनी-लेखया भू-वर्त्म दर्शय, न तु वर्षण-गर्जन-तर्जनैस्ता भाययेरिति मेघं प्रति यक्षस्य सन्देश-वचनेऽपि मार्दवानुमोदनमेव निष्पद्यते :—

"गच्छन्तीनां रमण-वसतिं योषितां यत्र नक्तं
रुद्धालोके नरपति-पथे सूचि-भेद्यैस्तमोभिः।
सौदामिन्या कनक-निकष-स्निग्धया दर्शयोर्वीं
तोयोत्सर्ग-स्तनित-मुखरो मा स्म भूर्विक्लवास्ताः॥;'

खण्डितनायिकोपमानां कमलिनीनामपि प्रालेयरूपाश्रु-प्रोच्छनं प्राभातिक-दिनकर-कर-निकरैः प्रसाधितं तेन। 'नार्यो हि प्रकृति-मृदुला भवन्ति, अतश्च तासां कदापि उपेक्षा, प्रार्थना-निरसनम्, अपमानादिकञ्च नो विधेयम्'—इतीमं भावमाकलय्य चेतसि, गम्भीरामधिकृत्य यक्षः सन्दिशति यत् 'हे मेघ! न त्वया गम्भीरायाः कुमुद-विशदानि चपल-शफरोद्वर्तन-प्रेक्षणानि उपेक्षणीयानि, न वा जल-रूपेण नील-वसनेन विहीन तदीय-तट-नितम्बो यथेच्छं परित्याज्यः। तथापि अग्र-मार्ग-गमनाय यथा कथञ्चन गम्भीरां प्रति मानसं सरस-सहानुभूति-प्रणयाञ्जलि-मुपनीय पुरः पद-न्यासो विधेयः।' इत्थं निश्चेतन-प्रकृतिमपि ललनोचित-लालित्य निवेशनेन सचेतनयन् विजृम्भते भाव-राशिरनेकधा!

मेघदूतस्योत्तर-भागे तु विरह-विशीर्णां यक्षाङ्गनां चित्रयता तेन वियोग-वेलोचित-नारीजन-हृदय-सौकुमार्य्य-सागर एव समुद्वेलितः! अलका-पुर्य्यां देवाङ्गनानां देव-कन्यानां च निसर्गजं मौग्ध्यं सौकुमार्य्यञ्च मन्दाकिनी-कूल-गतासु कनक-सिकतासु 'गुप्तमणि'— संज्ञक-क्रीडावसरे, रात्रौ च नीवी-बन्धन-शैथिल्य-पतित क्षौम-वसनाभिर्लज्जा-मूढाभिर्वनिताभी रत्न-प्रदीपान् प्रति विफलं प्रेरिता-भिश्चूर्ण-मुष्टिभिः प्रकामं बुद्धि-गोचरीभवति।

अधोविगलिते, पद्ये तु नूनमेव तैस्तैर्निर्दिष्ट-मण्डनैर्मण्डितानां यक्ष-सीमन्तिनीनां निश्छला स्वच्छा छविर्मूर्त्तायिते :—

"हस्ते लीला-कमलमलकं बालकुन्दानुविद्धं
नीता लीला-प्रसव-रजसा पाण्डुतामानने श्रीः ।"

इत्थं मेघदूते न कुत्रापि नारीणां शारीरं मानसं वा कार्कश्यं दृक्पथमारोहिततराम् । सर्वत्रापि चेतनाचेतने चराचरात्मके नारी-जगति माधुर्य-धुर्यं मार्दवमेव ध्रुवमालिलेख स वनिताजन-सौकुमार्य्य-रक्षणैक-पक्षाग्रह-ग्रहिलः कवीन्दुः ।

कुमार-सम्भवे—नगेन्द्र-नन्दिनीं गौरीं बाल्ये मृदुलोपकरणैः क्रीडा-व्यापृतां निभालयन्तु सुधियः :—

'मन्दाकिनी-सैकत-वेदिकाभिः सकन्दुकैः कृत्रिम-पुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां क्रीडा-रसं निर्विशतीव बाल्ये ॥"

एवमेव सर्वत्रापि पार्वती-सर्वाङ्ग-वर्णन-प्रसङ्गे नारी-सौकुमार्य्य-राशि-रेव प्रवहतितराम् । दृश्यतां गौरी-बाहुद्वयं शिरीष-कुसुम-जित्वरम् :—

"शिरीष-पुष्पाधिक-सौकुमार्यौ बाहू तदीयाविति मे वितर्कः ।"

तृतीय-सर्गे तु मानवेतर-प्राणिवर्गीय-स्त्रीजातिष्वपि मधुकरी-मृगी-हस्तिनी-चक्रवाकीप्रभृतिष्वपि सौकुमार्यं परिलक्ष्यते । तपो-योग्य-वेष-धारिणी अपि मेनका-नन्दवर्धिनी उमा मृदुतां न विजहौ :—

"यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।
न षट्पद-श्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ॥"

अहो ! दृश्यतां पार्वत्या इतोऽप्यतिशयिता सुकुमारता, यस्याः सुकोमलं शरीरं तल्प-पतितैः केश-कुसुमैरपि विदूयते स्म :—

"महार्ह-शय्या-परिवर्तन-च्युतैः स्व-केश-पुष्पैरपि या स्म दूयते ॥"

अलमनल्प-जल्पनोपकल्पनैः ! सर्वमपि काव्यं मार्दव-रसायन-परिपोषितमिव प्रतिभासतेतराम् !

रघुवंशे—स्थालीपुलाक-न्यायेन रघुवंशाख्य-महाकाव्येऽपि कालिदास-कर-किसलयाङ्कितां नारीजन-सुकुमारतां विभावयन्तु सूरयः :—

"तासां मुखैरासव-गन्ध-गर्भैर्व्याप्तान्तराः सान्द्र-कुतूहलानाम् ।
विलोल-नेत्र-भ्रमरैर्गवाक्षाः सहस्र-पत्राभरणा इवासन् ॥"

इत्थम् अजेन्दुमती-परिवीक्षण-सक्षणाक्षीणां सुन्दरीणां वर्णन-चणेषु-पद्य-पुटकेषु सौकुमार्य-करम्बितो मौग्ध्य-रसो निर्गलति । अहो ! एकेनैव मृदुलतम-दिव्य-कुसुम-माल्येन कोमलाङ्ग्या इन्दुमत्या निधनावस्थामाकथयन् कवि-कुल-कोकिलो नूनं नारीषु कामपि सीमातीतां मृदुतां समीहते नु :—

"क्षणमात्र-सखीं सुजातयो स्तनयोस्तामवलोक्य विह्वला ।
निमिमील नरोत्तम-प्रिया हृत-चन्द्रा तमसेव कौमुदी ॥"

हन्त ! अज-विलाप-प्रलपितेषु पुनरपि इन्दुमती-मार्दवं रसिकजन-नयन-पथारोहणाय कल्पते :—

नव-पल्लव-संस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विषहिष्यते कथं वद वामोरु ! चिताधिरोहणम् ॥"

इन्दुमती न केवलं शारीर-कान्त्यैव मृद्वी आसीत्, प्रत्युत सुकोमलवचना पेलव-नयन-कटाक्ष-पात-रचना मृदु-मन्थर-गमना मोहक-विलास-बन्धुराऽप्यासीत् :—

"कलमन्यभृतासु भाषितं, कलहंसीषु मदालसं गतम् ।
पृषतीषु विलोलमीक्षितं, पवनाधूत-लतासु विभ्रमाः ॥"

इत्थमनेनेदमनुमीयते यत् कवि-कुल-गुरुः विधि-सचेतन-पाणि-पल्लव-प्रसाधितासु तासु तासु वनितासु न केवलं कालेवरं सौन्दर्य-गुम्फितं मार्दवमेवापेक्षते; प्रत्युत आहारे व्यवहारे, श्रुति-स्मृति-सदाचार-शोधित-मधुर-वचन-कलापे, खिन्नजनोद्वेगापमोदन-निपुण-नयन-विलासे, परिलज्जित-मातङ्ग-गमने, वार्तालापे सर्वत्रापि शिष्ट-कुलोचितं मानवता-निकेतनीभूतं किञ्चिदलौकिकमपि लौकिकं विलोलमप्यलोलं मार्दवं समुल्लालयति । मन्ये तस्यापि मनः शिक्षयति स्म लोकात् यतः—

'दृष्टि-पूतं न्यसेत् पादं, मनःपूतं समाचरेत्' इति ।

मालविकाग्निमित्रे—अत्र प्रथमं मालविका-गतं माधुर्य-रसं पिबन्तु :—

"दीर्घाक्षं शरदिन्दु-कान्ति-वदनं बाहू नतावंसयोः" इत्यादि ।

अग्रे तु वासन्तिक-कुन्दलतया उपमीयमाना सैषा मालविका नयनतटेषु मृदुता-ततिमातनोतीव:—

"शर–काण्ड–पाण्डु-गण्डस्थलेयमाभाति परिमिताभरणा
माधव–परिणत–पत्रा कतिपय--कुसुमेव कुन्दलता ॥"

पुनरपि प्रत्यग्र-पल्लव-पेलव-चरण-तलां तां पश्याम :—

"नव-किसलय-रागेणाग्रपादेन बाला
स्फुरित-नख-रुचा द्वौ हन्तुमर्हत्यनेन ।
अकुसुमितमशोकं दोहृदापेक्षया वा
प्रणमित शिरसं वा कान्तमार्द्रापराधम् ॥"

बकुलावलिकया तु मालविकां प्रति प्रस्फुटं व्याहृतमेव 'सखि, अरुण-शतपत्रमिव शोभते ते चरणम्' इति । तृतीयाङ्के राजा पुनरपि मालविका-माधुर्यमुपस्थापयति:—

"किसलय-मृदोर्विलासिनि ! कठिने निहितस्य पादपस्कन्धे ।
चरणस्य न ते बाधा सम्प्रति वामोरु ! वामस्य ॥"

एवमेव पदे पदेऽस्मिन् नाटके नार्यो मृदुलायन्ते निर्विचिकित्सम् ।

विक्रमोर्वशीये—अस्मिन्नपि नाटके सहृदय-हृदय-चक्रवर्तिना कविकुल-गुरुणा नारी-सौकुमार्यं पल्लवितमेव । वीक्ष्यताम्, मूर्च्छितापि उर्वशी कीदृशी परिभाति पुरूरवसः कृते :—

"मुञ्चति न तावदस्याः कम्पं कुसुम-सम-बन्धनं हृदयम् ।
पश्य हरिचन्दनेन स्तन-मध्योच्छ्वासिना कथितम् ॥"

अहो ! उर्वश्यां यादृङ् माधुर्यं मार्दवच्च परिलक्ष्यते, तादृङ् न कुसुमितासु सौरभावृतासु शाखानतासु लतासु कथमपि किञ्चनापि:—

"मम कुसुमितास्वपि सखे ! नोपवन-लतासु नम्र-विटपासु ।
चक्षुर्बध्नाति धृतिं तद्रूपालोकन-दुर्ललितम् ॥"

राजा स्वकीयायां पाणि-गृहीत्याम् औशीनरी-देव्यामपि मृणालगुण-माधुरीमनुबध्नाति :—

"अनेन कल्याणि ! मृणाल-कोमलं व्रतेन गात्रं ग्लपयस्यकारणम् ।

किं बहुना, सम्पूर्णे नाटकेऽत्र मृदुलाङ्गना-सौकुमार्य्यामोदः प्रसरत्येव परितः।

अभिज्ञानशाकुन्तले-साधारणं मार्दवं पदे पदे दुष्यन्त-मुखेन विकीर्य्यमाण-मासाद्यतेऽत्र। प्रथमदर्शन एव दुष्यन्त-नयनासेचनकं शकुन्तला-लावण्यं नूनमेव मृदुता-तरङ्ग-रङ्ग-करम्बितं स्वरूपं सम्प्रस्तावयति :—

'अधरः किसलय-रागः कोमल-विटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥

पुनरपि विदूषकं प्रति शकुन्तला-सौन्दर्य-पीयूष-धारामापातयन् दुष्यन्तः काञ्चनापि सहृदय हृदय-समर्चनीयऽनर्वचनीयां मृदुतां समुन्चिनोति :—

"अनाघ्रातं पुष्प, किसलयमलूनं कररुहै—
रनाविद्धं रत्नं, मधु नवमनास्वादित-रसम् ।" इत्यादि ।

कोमलाङ्गीषु नारीषु कोमलान्येव मनोरमाणि भवन्त्याहार्य-वस्तून्यपि :-

"ईषदीषच्चुम्बितानि भ्रमरैः सुकुमार-केसर-शिखानि ।
अवतंसयन्ति दयमानाः प्रमदाः शिरीष-कुसुमानि ॥"

इयं च ललनाजन-विलसिता सहज-मृदुलता-लता सर्वैरपि भव्यावदात-हृदयैः सन्ततमेव सेवनीया, नावहेलनीया, भूषणीया; न दूषणीया कदाचनापि। अतएव आसमुद्र-क्षितीशो दुष्यन्त शकुन्तला-चरणाब्ज-सेवनमेव अमन्दानन्द-सन्दोहदमा-मनुते :-

'अङ्के निधाय चरणावुत पद्म-ताम्रौ
संवाहयामि करभोरु । यथासुखं ते ।" इत्यादि।

समयाभावादेतावदेव वचन-निचयं समुपानीय विषयमुपसंहार-क्रोडं नयामि।

"सुधाभिरिव संस्नाता, मकरन्दैः करम्बिता।
कालिदासीय-साहित्ये "ललना-मृदुता-लता' ॥"

# लोके वेदे च देवरः

## डा० मञ्जुमयङ्कपन्तुलः शान्तिनिकेतनम्

पाणिनिना अप्रसाधितः, यास्केन च निरुक्तः देवरशब्दो यथा वैदिकस्तथैव लौकिकः। दिव् धातोरौणादिके "अर" प्रत्यये कृते निष्पन्नो देवरशब्दो लौकिकः, यस्य च पत्युः कनिष्ठभ्रातरि, अर्थपर्यवसायः। परिनिष्ठिते देवर-शब्दे, मातुलान्यादिवत्, पुंयोगे संगतस्यापि, देवरानीति रूपस्य सर्वथाभावः गवेषकाणां विस्मापकम्। अपत्याद्यर्थेऽपि, अस्मात् शब्दात् प्रत्ययाविधानम्, पाणिनेः अनुग्रहपरिक्षीणतां देवरे द्योतयति।

१कुहस्विद्दोषेति ऋग्वेदीये मन्त्रे लभ्यमानस्य देवरशब्दस्य, यास्केन स्वकीये निरुक्ते "द्वितीयो वर२—"इत्यर्थो दर्शितः। सायणेन, स्वकीये ऋग्वेदभाष्ये, देवर भर्तृभ्रातरमित्यभिधाय३, भर्तृभ्रातरि एव रूढीकृतोऽयं शब्दः। किन्तु लोके बहुत्र, देवरशब्दः भर्तृभ्रातृभिन्नेऽप्यर्थे प्रयुक्तो दृश्यते, यथा भागवतमहापुराणस्य चतुर्थे स्कन्धे ४। द्वितीयो वर इत्युक्तेः, मुरारेस्तृतीयः पन्था इति वत्, यास्कस्य वैदिको देवरः लौकिकाद्देवरात् विभिद्यताम् भागवते च देवरशब्दस्य प्रयोगः पुरञ्जनेन स्वभार्यानुनयावसरे आत्मने कृतः। अत्र च देवरशब्दस्य चेत् यास्करीत्या अर्थः क्रियेत, तर्हि पुरञ्जनस्य द्वितीयवरत्वं, बालायाः पुरञ्जन्याश्च परिणयात् पूर्वं पुनर्भूत्वं, सायणीयपद्धत्या च पुरञ्जनस्य असतोऽपि भ्रातुः, कनिष्ठभ्रातृत्वं च युगपदेव जायताम्।

भागवतभाष्यकारैः, अत्र प्रयुक्तस्य देवरशब्दस्य प्राकरणिकत्वमुपपादयितुं यदृच्छा व्याख्या पद्धतिरवलम्ब्यते। यथा श्रीधरस्वामिना—देवो देवनं क्रीड़ा, तां रातीति देवरः कान्तः, वीरराघवाचार्येण—देवं देवनं क्रीड़ां रातीति देवरः कान्तः, विजयध्वजतीर्थेन—देवं रतिक्रीडादिकं ददातीति देवरः पतिः, विश्वनाथचक्र-वर्त्तिना च—देवो देवनं क्रीड़ा, तां राति ददातीति देवरः, शुकदेवेन - देवं देवनं क्रीडा तां राति ददातीति देवरः क्रीडाप्रदः, प्रभृत्यर्था उपपादिताः। रतिक्रीड़ां कान्ते

परिपश्यतां भाष्यकाराणां कान्तपदस्य क आशयः इति स्फुटन्न भासते। वस्तुतः कस्य रतिक्रीड़ादिकसुखस्य अन्तो योऽसौ इति व्युत्पत्या पतिः प्रणयी चोभावपि गम्येते। विजयध्वजतीर्थेन स्वीयया असादृश्या व्याख्यया, एतादृशस्य सुखस्य पति-पर्यवसायितया, पतिरेव कान्तो गृहीतः। अन्येषां मते तु रतिक्रीढादिकं सुखं न केवलमेकाकिना पत्या अपितु येन केनापि प्रणयिना दातुं शक्यत्वात् प्रणयिजनोऽपि कान्तपद वाच्य इति विमृश्यते। तत् विजयध्वजमते पतिरेव देवरः श्रीधरादिमते प्रणयी अपि देवरः इति उभावप्यर्थौ यास्कनिरुक्तेः भर्तृभ्रात्रर्थात् बाध्येते।

देवरशब्दस्य यास्कीयां निरुक्तिं पुरस्कृत्य, निरुक्तिभाष्यकर्त्ता स्कन्दस्वामिना देवरस्य मर्यादा स्पष्टीकृता :—

"क्रीडनकाय एवासौ भवति न धर्माय५।"

धर्मकार्ये पत्युरेवाधिकारात्, धर्मकार्याद् व्यावर्तितस्य (क्रीडनकत्वात्) देवरस्य न कथमपि पतित्वं संगच्छते। स्कन्दोक्त्या भर्तृभ्राता अन्यो वा क्रीडनकाय वृतः, देवरपदभाक्। उत्तरप्रदेशे, श्रूयमाणोक्तिः "आयाते फाल्गुने मासि बृद्धोऽपि देवरायते" स्कन्दार्थानुमोदने लोकाचाराश्रितमन्यतरत् प्रमाणम्।

किन्तु नैतावतैव अलम्। भागवते अपरत्र प्रयुक्तस्य देवरशब्दस्य, एभिरेव भागवतटीकाकारैः अन्यादृशोऽर्थोऽपि दर्शितः। "ता देवरानुत सखीन्६" प्रभृति भागवतीये श्लोके पठितस्य देवरशब्दस्य श्रीधरस्वामिवीरराघवाचार्याभ्यां "देवरान् पतिभ्रातॄन् इति, वल्लभाचार्येण च त एव मातुलपुत्राः देवरा इति, विश्वनाथचक्रवर्त्तिना च यथा पत्युर्भागिनेये भागिनेय शब्दः प्रयुज्यते तथैव पत्युर्मातुलेयोऽपि मातुलेय उच्यते, तस्य देवरत्वात्तेनैव सह परिहासौचित्यात् इत्युक्तम्। आसु व्याख्यासु पत्युर्भ्राता देवर इति प्रतिपादितं दृश्यते, यस्य च पूर्वत्रोद्धृतस्य ( कां देवरमित्यादिश्लोकीयस्य ) देवरशब्दस्य मिथः अर्थसंगतिः व्याहन्यते। एवन्तर्हि द्वौ देवरशब्दौ, एकस्तावत् पत्युर्भ्रातरि, द्वितीयश्च प्रणयिन्यर्थे इति अधिगच्छामः। भागवते यथा द्विः प्रयुक्तयोः देवरशब्दयोः, निरुक्त्या व्याख्यया च द्वौ अर्थौ लभ्येते तथैव देवरभ्रातृजाययोः परिहासौचित्ये, अनुमोदितानन्नु-मोदिते द्वे चरित्रेऽपि अवधार्येताम्। न चाऽत्र स्मृतयो वाचंयमाः। स्मृतीनामुद्ध-

णैरपि देवरस्य, सामाजिकी स्थितिः निश्चेतुं शक्यते । तत्र मनुना वाचासत्ये कृते, यस्याः पतिः म्रियेत, तां देवरो विन्देत,७ अपुत्रां स्त्रियं सपिण्डः सगोत्रो वा गुर्वनुज्ञातो देवरः पुत्रकाम्यया८ गन्तुं समर्थ इति च स्मृतम् । न च बृहत्पाराशर-वृहन्नारदीयव्यासमाधवीयस्मृतिभिः९ .देवरस्येदमाचरणं समर्थ्यते । कालान्तरं, देवरात्, सुतोत्पत्तेः कलिवर्ज्यत्वात्, देवरभ्रातृजाययोः यौनसंबन्धोऽनुचितो जातः । किन्तु लोकस्तु मर्यादां, विशेषतः विधिविधानग्रस्तां मर्यादान्न गणयति । गाथासप्तशत्यां, काचन भर्तृजाया देवरकृतां नखक्षतपरिपाटीं, देवराय दर्शयन्ती परिहसति, १० । अन्या च देवरे चाटुकारशुनकस्य निर्वर्तितकार्यपराङ्मु-खत्वमारोपयति११ । आर्यासप्तशत्याः कुपिते गृहपतौ वृषभं परिभवति, निभृत-निमीलितवदनयोः भ्रातृजायादेवरयोः१२ हासः, कनिष्ठे भ्रातरि भर्तृभ्रातृत्वं, प्रणयित्वमुभयमपि आदधाति । एतत्प्रतिकूलान्यपि चरित्राणि गाथासप्तशत्यां निरीक्ष्यन्ते; तत्तु स्वेच्छाव्यापारमात्रविषयम् । स्मार्त्तोपदेशैः, मर्यादाभिश्च बद्धा भ्रातृजाया देवरे प्रणयित्वं नादधीत चेत्, न तेन प्रचलनं निन्द्यते । यथा कयोश्चित् कुलवध्वोः, एका अशुद्धमनसम् असदृशचित्तं देवरं वीक्ष्य निजकुड्यलिखितानि सौमित्रिचरितानि कथयति१३ अपरा च कुलविघटनभयात् विषमशीले स्वामिनि देवरस्य असदृशचित्ततां नावेदयति ।१४

वस्तुतः, अनायासं प्रणयिलाभो भर्तृभ्रातरि सर्वासामपि सुलभः । अत एव भर्तृभ्राता देवरः संवृत्तः । देवरश्च क्रीडनकाय म्रियेत न वा म्रियेत, इत्यत्र रुचि-वैरस्यमेव कारणम् । किन्तु अत्र संशयो नास्ति यद् भर्तृजायाः विवृतगात्रकुचोरु-मध्या, सत्योऽपि देवरेभ्यो न व्रीडन्ति स्म । इयञ्च भ्रातृजायादेवरपरिहास-परम्परा, विनोदनहेतुः यौनसम्बन्धश्च कस्मात् कालात् जातः, इति निश्चप्रचं वक्तुमसंभवम् । अस्माभिस्तु एतावन्मात्रं विविच्यते यत् भर्त्तुरनुजः भर्त्तरि जीवत्यपि भ्रातृजायायाः क्रीडाहेतुः, यस्यां क्रीडायां धर्मकार्यात् ऋते, नासीत् कश्चनापि विधिर्वा निषेधो वा । अत एवासौ द्वितीयवरकल्पो द्वितीयो वर एव । पतिवत् समस्तभोगदातृतयाऽस्य प्रणयी च देवरः । देवरभ्रातृजाययोः सम्बन्धस्य कलि-वर्ज्यत्वादेव शुद्धाशुद्धाचरणस्य विवेकः प्रावर्त्तत, नान्यथा । पुरा तु देवरभ्रातृ-

जायासम्बन्ध आसीदेवेति आर्षैरेव चरित्रैः लभ्यते । बृहद्देवतायामुद्धृतो ममता-बृहस्पत्योरितिहास१५ एवात्र प्रमाणम्, किं बहुना ।

●

## संदर्भाः—

१. ऋग्वेदः । १०।४०।२
२. देवरः कस्मात् द्वितीयो वर उच्यते । देवरो दीव्यति कर्मा ।
   निरुक्तम् । अ. ३ । खं० १५ ।
३. यथा मृतभर्तृका नारी **देवरं भर्तृभ्रातरम्** अभिमुखी करोति ।
   सायणीयमृग्वेदभाष्यम् । १०।४०।२
४. तन्मे प्रसीद सुहृदः कृतकिल्विषस्य; स्वैरं गतस्य मृगया व्यसनातुरस्य ।
   का देवरं वशगतं कुसुमास्त्रवेगविस्रस्तपौंस्न मुशती न भजेत कृत्ये ।।
   श्रीमद्भागवतम् । चतुर्थः स्कन्धः । अध्यायः २६ । श्लोकः २६ ।
५. देवरो दीव्यतिकर्मा । क्रीडनकाय एवासौ भवति न धर्माय । स्कन्दस्वामि-निरुक्तभाष्यम् । लक्ष्मणस्वरूपसंस्करणम्—पृ० १६७
६. ता देवरानुत सखीन् सिषिचुर्दृतीभिः,
   क्लिन्नाम्बरा विवृतगात्रकुचोरुमध्याः ।
   औत्सुक्यमुक्तकबराच्च्यवमानमाल्याः,
   क्षोभं दधुर्मलधियां रुचिरैर्विहारैः ।।
   श्रीमद्भागवतम् । दशमः स्कन्धः । अध्यायः ७५ । श्लोकः १७ ।
७. यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
   तामनेन विधानेन निजो विन्देत देवरः ।.
८. अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया सपिण्डो वा सगोत्रो वा ऋतावियात् ।।

९. देवराच्च सुतोत्पत्तिः कलौ पञ्चविवर्जयेत् । वृहत्पाराशरः ।
देवराच्च सुतोत्पत्तिः मधुपर्के पशोर्वधः । वृहन्नारदीयः ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् । माधवीयपुराणम् ।
देवराच्च सुतोत्पत्तिः दत्ता कन्या न दीयते । व्याससमृतिः ।

१०. अयि देवर ! किन्न प्रेक्षसे आकाशं किं मुधा प्रलोकयसि ।
जायाया बाहुमूलेऽर्द्ध चन्द्राणां परिपाटीम् ॥७०॥ गाथासप्तशती ।

११. सत्यं कथय देवर ! तथा तथा चाटुकारेण शुनकेन ।
निर्वतितकार्यपराङ् मुखत्वं शिक्षितं कस्मात् ॥८८॥ गाथासप्तशतीं ।

१२. दलिते पलालपुञ्जे वृषभं परिभवति गृहपतौ कुपिते ।
निभृतनिभालितवदनौ हालिकवधूदेवरौ हसतः । आर्यासप्तशती ।

१३. देवरस्याशुद्धमनसः कुलवधूर्निजककुड्यलिखितानि ।
दिवसं कथयति रामानुलग्नसौमित्रिचरितानि ॥३५॥ गाथासप्तशती ।

१४. असदृशचित्ते देवरे शुद्धमनाः प्रियतमे विषमशीले ।
न कथयति कुटुम्ब-विघटनभयेन तनुकायते स्नुषा ॥५६॥ गाथासप्तशती ।

१५. द्वावुचथ्यबृहस्पती ऋषिपुत्रौ बभूवतुः ।
आशीदुचथ्यभार्या तु ममता नाम भार्गवी ॥
तां कनीयान्बृहस्पतिर्मैथुनायोपचक्रमे ।
बृहद्देवता । चतुर्थोऽध्यायः । श्लोकाः १६।१४ । मैक्डानेलसंस्करणम्

●

## धन्यः

●

सरसान्तरो नितान्तं गुणमपरेषां हृदा गृह्णन् ।
जीवनवृत्तिवदान्यो भूपः कूपोपमो धन्यः ॥

प्रभातमिश्रः

●

# श्री पुराणविषये

## डा० कृष्णमणि त्रिपाठी

पुराणानि गौरवदृष्ट्या अत एव दृश्यन्ते यदत्र वेदानां शिक्षायाः पुष्टिः कृतास्ति दृष्टान्तद्वारा च वेदार्थानामेव विशदीकरणं विद्यते। पुराणेषु वेदार्थानां स्पष्टीकरणेन सह कथावैचित्र्यद्वारा गूढाद्गूढतमस्यापितत्त्वस्य साधारणजनानां हृदयङ्गमसम्पादनवैशिष्ट्यमस्ति । विश्वस्मिन् कस्या अपि सभ्यजातेः समीपे पुराणसदृशो विशालः सर्वाङ्गपूर्णो न कोऽपि ग्रन्थो विद्यते । पुराणैरेव भारतीयादर्शजीवनस्य भारतीयायाः सभ्यतायाः संस्कृतेः विद्यायाः, वैभवस्य, ज्ञानगरिम्णः, उत्कर्षस्य च वास्तविकं ज्ञानं जायते । पुराणानि बद्धमुक्तमुमुक्षूणां मानवानां सन्मार्गप्रदर्शकानि सन्ति । इतिहासेन पुराणैश्च वेदार्थानां सम्यगुपबृंहणं भवति यतो हि वेदे सूक्ष्मरूपेण यन्निर्दिष्टमस्ति, तस्यैव विस्तृता व्याख्या दृष्टान्तद्वाराऽऽख्यानोपाख्यानैर्गाथाभिश्च भाष्यरूपेण महाभारते पुराणेषु च कृता विद्यते।

अद्यत्वे यद्यपि वेदानां सर्वाः शाखा नोपलभ्यन्ते तथापि दिव्यज्ञानसम्पन्नः त्रिकालदर्शी महर्षिर्व्यासः तासां मूलविषयं पुराणेषु यत्र तत्र प्रसङ्गवशात् अङ्कितवानेवास्ति येनाद्यत्वे बहूनां वेदशाखानामनुपलब्धावपि तासां प्रतिपाद्यविषयाणामवगाहनं भवत्येव । एतच्च पुराणानां महद्वैशिष्ट्यमस्ति ।

### पुराणाध्ययनस्यावश्यकता

पुराणानामध्ययनेन वेदार्थनिधीनामुपलब्धौ म त् साहाय्यमवाप्यते । यद्यपि महर्षिणा वेदव्यासेन ब्रह्मसूत्रे योगभाष्ये च प्रतिपादिताध्यात्मनिष्ठया त्रितापान्मुक्तये सरल उपायः प्रदर्शितोऽस्ति । तथापि भक्तिमूलकज्ञाननिष्ठायाः पूर्णतमः परिपाकस्तु पुराणेष्वेव जातोऽस्ति ।

पुराणानां कथाभिः सरलतया सर्वं साधनं बुद्धिगम्यं कर्तुं शक्यते । यथा यजुर्वेदे ईशावास्यमन्त्रे मनुष्यतायाः पूर्णविकासस्य साधनं निर्दिष्टमस्ति, किन्तु

केवलेन मन्त्रपाठेनार्थज्ञानेन वा सा भावना हृदये न जागर्ति । अतः पुराणप्रतिपादिताभिः महर्षेर्दधीचेः, राज्ञः शिवेः, मोरध्वजस्य च कथाभिरुपकारभावना, सत्यवादिनो राज्ञो हरिश्चन्द्रस्य धर्मराजस्य युधिष्ठिरस्य चोपाख्यानेन सत्यनिष्ठा, दानवीरस्य बलेः कर्णस्य च कथानकेन दाननिष्ठा, अगस्त्यवसिष्ठच्यवनादीनां महर्षीणां कृत्यैरद्रोहभावना, अनसूया—सती-सीता—सावित्री-मदालसा—नर्मदा—दमयन्ती—सुकन्या—सुलोचनादीनां रमणीमणीनां पवित्राचरणैः पातिव्रत्यादिधर्मपरायणतायाः सञ्चारः नरेषु नारीषु सहसा समुद्भवति । एवं "सत्यं वद, धर्मं चर,, इत्याद्युपदेशमात्रेण कश्चित् सत्यवादी धर्मात्मा वा भवितुं नार्हति । अतो वेदबोधितेति कर्तव्यतां पुराणेषु कथानकरूपेण मनोग्राह्यां विधातुं ऐहलौकिकं पारलौकिकञ्च जीवनं सफलयितुमादेशोदत्तोऽस्ति । महर्षिणा वेदव्यासेन अष्टादशपुराणेषु सर्वेषां धर्माणां सारः परोपकारः, पुण्यं, परपीडनं च महत् पापमुपदिष्टमस्ति । अयं मानवतायाः कीदृक् श्लाघ्यो मौलिकश्चादर्शोऽस्ति =

अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ।।

यद्यपि पुराणेषु सर्वेषामास्तिकदर्शनानां सिद्धान्तस्य सूत्ररूपेण निरूपणं विद्यते तथापि सांख्ययोगवेदान्तानां दर्शनानां विशेषतो विवेचनमुपलभ्यते, किञ्च व्याकरण-साहित्यच्छन्दो ज्यौतिष-निरुक्त-शिक्षा-कल्पायुर्वेदधनुर्वेदगन्धर्ववेदस्थापत्यकलाराजनीतिसमाजनीतिप्रभृतीनां पर्याप्तः प्रकाशः पुराणेषु प्राप्यते । अत एव पुराणानि भारतीयविद्यायाः संस्कृतेश्च विश्वकोषा उच्यन्ते । आधुनिका वैज्ञानिका बहुना व्यापारेणार्थव्ययेन च प्रेतलोकस्य मङ्गललोकस्य चन्द्रधरातलस्य च यद् ज्ञानं प्राप्तवन्तः न तदस्ति सर्वतः परिपूर्णं यतो हि नाधुनापर्यन्तं तेषां ज्ञानं जातमस्ति, यदितः परमपि कश्चित् सूक्ष्मः स्तरो विद्यते । पुराणेषूर्ध्वमधश्च स्थितानां चतुर्दशानां भुवनानां तत्रत्यानां निवासिनामायुषः, आहारस्य, विहारस्य, व्यवहारस्य, तत्र प्रचलितस्य कालमानस्य च निश्चितं वर्णनं विद्यते । येनेदं ज्ञायते यदस्माकं पूर्वजानां कियदतिनिर्मलं विस्तृतं बहुज्ञतापूर्णञ्च ज्ञानमासीत् ।

पुराणानि सर्वसाधनसम्पन्नानि सर्वोपयोगीनि च सन्ति । अतः सर्वशास्त्रेषु

तेषां गौरवं गीतमस्ति । पुराणेषु ज्ञानस्य कर्मणो भक्तेश्च महत्त्वपूर्णेन वर्णनेन साकं मानवजीवनस्य यावत्यो दृष्टयः सन्ति तासां सर्वासां वर्णनं विद्यते, येन आबाल-वृद्धा नरानार्यश्च समानं लाभं लब्धु शक्नुवन्ति । पुराणानि सांसारिकतापतप्तानां प्राणिनां प्रबोधम्, अज्ञानान्धकारे निपतितानां प्रकाशम्, भ्रान्तानां सन्मार्गम्, निराशानामाशा ज्योतिः शोकतप्तानामुल्लासमयं प्रसादम्, पथभ्रष्टानां कर्तव्य-ज्ञानम्, पापिनां पापनाशनसाधनम्, नीतिनिपुणानां नीतिनैपुण्यम्, निष्कर्मिणां साधनोपदेशम्, भक्तानां भक्तिभावम् ज्ञाननिनाञ्चालौकिकमालोकम् प्रददाति । तात्पर्यमिदमस्ति यद ये जिज्ञासवो येनोद्देशेन पुराणेषु विश्वासपूर्वकं श्रद्धया तेषाम-नुशीलनं कुर्वन्ति ते समुद्रादमूल्यं रत्नमिव तेभ्य उभयलोककल्याणकारि बहु-मूल्यं सदुपदेशं प्राप्य स्वं जीवनं सफलयितुं समर्था भवन्ति । पुराणेषु विविधानां सिद्धपीठतीर्थक्षेत्रवनपर्वतादिभूगोलखगोलवर्णनात् आधुनिकानामनुसन्धातॄणां महत्साहाय्यमवाप्तुं शक्यते । अतोऽनुसन्धानकर्तृभिः सर्वोपयोगिनां पुराणानामध्यय-नमवश्यं विधेयम् । पौराणिकीः कथा आश्रित्यैव कालिदासादयो महाकवयः अनेकानि महाकाव्यानि नाटकानि चम्पूश्च निर्माय काव्यानन्दसहोदरानुभूतिं कारितवन्तः । अतः संस्कृतवाङ्मयरहस्यविद्भिः विशिष्टैः विद्वद्भिः पुराण-साहित्यं महत्या गौरवदृष्ट्या दृश्येत ।

## पुराणेषु काव्यसौन्दर्यम्

पुराणेषु हृदयाह्लादकस्य काव्यसौन्दर्यस्याभावो नास्ति । विभिन्नासु स्तुतिषु देवानामैश्वर्यवर्णने गन्धर्वाप्सरसां रूपनिरूपणे राज्ञां नगरवर्णने च पर्याप्तं काव्य-सौन्दर्यं विलोक्यते । पुराणेषु हावभावरीतिरसगुणालङ्कारादीनामपि स्थाने उपयुक्त उपयोगः कृतोऽस्ति । पूर्णचन्द्रवत्कान्तिमुखीनां गन्धर्वकुमारीणां वर्णने मानसरोवरस्य रत्नजटितसोपानादवतरन्तीनामप्सरसां सौन्दर्याकर्षणस्य भावभङ्गिमायाश्चोत्कृष्टतावर्णनेऽपूर्वं काव्यसौन्दर्यं दृष्टिगोचरी भवति । हार-कुण्डल-वलयाङ्गद-केयूर-रशनादिभिराभूषणैः विभूषितानां ललनाललामभूतानां कुलमणीनां रमणीनां चित्रविचित्रमुकुटालङ्कृतानां रङ्गविरङ्गवस्त्रधारिणां पुरुषाणाञ्चाकर्षकं वर्णनमुपलभ्यते । हरिवर्षवर्णनप्रसङ्गे प्राकृतछटायाः श्वेतनील-

शिखराणां शिखरिणामाकृष्टपूर्णशोभाया मनोहारि वर्णनं विद्यते। कैलासपर्वत-वर्णनावसरे उक्तमस्ति यत् एकतः स वर्णतः मुकुदवद्धवलोऽति अपरत्र च सरोवरेषु विकसितचन्द्रज्योत्स्नावत् कान्तिमत्कुमुदादिधवलिमानं द्विगुणीकरोति। चित्रविचित्रोद्यानैः विविधैः स्रोतोभिः कन्दराभिः उत्तुङ्गशिखरैः लताभिराच्छन्नैरनेकैः कुञ्जैश्च स गिरि नितरां सुशोभते—

अनेकाभिः स्रवन्तीभि राप्यायितजलाशयाः।
एवं शैलसहस्राभिः सादयन्तो महाशिवाः॥

(ब्रह्माण्डपुराणे ५।७२)

त्रिपुरचन्द्रिकायां वनविहारशीलानामसुरकन्यकानां शृङ्गारवर्णनं खण्डकाव्यस्यानन्दमुपस्थापयति। स्थले स्थले हिमालयस्य छटायां नदनदीनगरीणाञ्च समृद्धौ यच्चित्रमङ्कितमस्ति तदत्यन्तं चित्ताकर्षकं विशदं च वर्तते। एवमनेकेषां वनपर्वतारण्यादीनां प्रकृतिनिरीक्षणं समेषां मनोहारि वर्तते।

श्रीमद्भागवतस्य पञ्चमे स्कन्धे गद्यच्छटा कादम्बरीगद्यच्छटातः उत्कृष्टं विलोक्यते। विष्णुपुराणस्य चतुर्थेऽशे ललितगद्येन सोमसूर्यवंशोद्भवानां राज्ञां चरित्रचित्रणं दर्शनीयमस्ति। नन्दराजस्य गृहे पुत्रोत्पत्तिं श्रुत्वा वस्त्राभूषणादिभिः सुसज्जीतगोपीनां यूथीभूय गमनवर्णनं केषां मनो न विनोदयति—

गोप्यः सुमृष्टमणिकुण्डलनिष्ककण्ठ्य-
श्चित्राम्बराः पथि शिखाच्युतमाल्यवर्षाः।
नन्दालयं सवलया व्रजतीर्विरेजु-
र्व्यालोलकुण्डलपयोधरहारशोभाः॥

(श्रीमद्भागवते १०।५।११)

स्कन्दपुराणस्य काशीखण्डे भगवन्तं शिवं प्रति पार्वतीद्वारावर्णितकाशीमहिम्नः प्रसङ्गे धकारस्यानुप्रासो दर्शनीयोऽस्ति—

धराधरेन्द्रस्य धरातिसुन्दरा न मां तथास्यापि धिनोति धूर्जटे।
धरा गतापीह न या ध्रुवन्धरा पुरी धुरीणा तव काशिका यथा॥

(काशीखण्डे ४४।३०)

पार्वतीं प्रति मात्स्ये च वाराणसीवर्णनावसरे प्रसादगुणस्य मनोहरं दृश्यमक्षिलक्ष्यीभवति ।

वाराणसी तु भुवनत्रयसारभूता
रम्या सदा मम पुरी गिरिराजपुत्रि !
अत्रागताविविधदुष्कृतकारिणोऽपि
पापक्षयाद्विरजसः प्रतिभान्ति मर्त्याः ॥

(मत्स्यपुराणे ७६।७८)

## पुराणानां स्रोतांसि

पुराणानां कानि सन्ति स्रोतांसि येषामाश्रयं गृहीत्वा भगवान् वेदव्यासः तेषां प्रणयनं कृतवानिति जिज्ञासायामिदमुच्यते यत् पुराणतत्त्ववेत्ता महर्षिः व्यासः आख्यानानाम् उपाख्यानानां गाथानां कल्पशुद्धीनाञ्चाशयमादायाष्टादशमहापुराणानि रचयाञ्चकार—

आख्यानैश्चाप्युपाख्यानै गथाभि कल्पशुद्धिभिः ।
पुराणसंहितां चक्रे पुराणार्थविशारदः ॥

तत्र स्वयं दृष्टार्थकथनमाख्यानमुच्यते परम्परयाश्रुतमुपाख्यानमाख्यायते—

स्वयं दृष्टार्थकथनं प्राहुराख्यानकं बुधाः ।
श्रुतस्यार्थस्य कथनमुपाख्यानं प्रचक्षते ॥

अ० पुराणदर्पणे

अर्थात्—यस्यार्थस्य साक्षात्कारो वक्ता स्वयं कृतोऽस्ति—तदाख्यानं निगद्यते, यस्यार्थस्य च कथनं वक्ता अन्यव्यक्तिद्वारा श्रुतं विद्यते तदुपाख्यानं कथ्यते । एतदनुसारं श्रीरामस्य राज्ञो हरिश्चन्द्रस्य ययातेश्च कथानकं यस्य परम्पराश्रुतास्ति तत् रामोपाख्यानं हरिश्चन्द्रोपाख्यानं ययात्युपाख्यानमुच्यते । केषाञ्चिन्मते भेदोऽयं न दृष्ट-श्रुतकारणकोऽस्ति, अपितु महदल्पाकारको विद्यते। आकारे यत् महदस्ति तदाख्यानं भवति अपेक्षाकृतं स्वल्पाकारकं कथानकमुपाख्याननाम्ना प्रसिद्धमस्ति । एतद्रीत्या रामायणे श्रीरामस्य कथानकमाख्यानमस्ति तथा तदेकदेशे वर्तमानं सुग्रीवस्य कथानकमुपाख्यानं कथ्यते ।

अज्ञातकर्तृकाणां लोकप्रख्यातानां श्लोकानां संज्ञा गाथाऽस्ति। प्राचीन-साहित्ये अनेकानि एवम्विधानि प्राचीनपद्यानि उपलभ्यन्ते येषां कर्तृणां नामानि न ज्ञायन्ते यानि केषाञ्चित् मन्यमहीपतीनां प्रशंसायामसामान्ये शौर्ये औदार्ये दान-महिम्नि च प्रतिपादितानि सन्ति। ईदृशा अज्ञातकर्तृका लोकप्रख्याताः श्लोका गाथापदेनोच्यन्ते। महाभारते यथा पितृगाथा—

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्॥

(वनपर्व ८४।७७)

तत्रैव ययातिगाथा यथा—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥

एवं विधा अनेका गाथास्तत्तत्पुराणेष्वपि श्रूयन्ते। कल्पशुद्धिः-श्राद्धकल्पः। भगवता व्यासदेवेनैषामाख्यानोपाख्यानगाथाकल्पशुद्धिनां चतुर्णामेव पुराणनिर्माणे आश्रयणं कृतमस्ति। अत इमान्येव सन्ति पुराणानां स्रोतांसीति निश्चप्रचम्।

## उपसंहारः

भारतीयजीवने पुराणपाठस्य पूर्णं ध्यानं प्रदत्तमस्ति। धर्मप्रिया जनता पुराणं पुण्यजनकं मन्यते। धर्मो हि इहलोक-परलोकाभ्यां सम्बन्धमभिवाञ्छति। अतः पुराणेषु उभयोः लोकयोः पर्याप्तं विवेचनं कृतं विद्यते। यदनुशीलनेन मानवजन्मनः साफल्यं कर्तुं शक्यते। पुराणानामध्ययनेन जायते यदस्माकं पूर्वजैः ऐहलौकिक-पारलौकिकाभ्युदयाय कस्कोऽपूर्वः प्रयासो विहितः। सत्यद्रष्टृभिर्मुनि-भिर्मानवजीवनं सर्वविधं समुन्नतशीलं कर्तुमध्यात्मवादस्य पूर्णसमर्थनं कृतमास्ते। अतो मानवमात्रस्य परमं कर्तव्यमस्ति यत्कस्यामपि परिस्थितौ अवस्थायां वा निराशो न भूत्वा स्वमीश्वरांशं मत्वा तेन सह सम्बद्धुं सततं प्रयासं कुर्यात्। इत्येव पुराणानां शाश्वतः सिद्धान्तोऽस्ति, मुख्यमुद्देश्यमपि पुराणनिर्माणस्येदमे-वास्ति।

भारतीयसंस्कृतेरुदगमविकाशयोः पुराणानां पर्याप्तः सहयोगो दरीदृश्यते। पूर्वजानामस्माक' परम्परया यद् भारतीयजीवनमनुस्यूतमास्ते तस्य श्रेयः पुराणानामेव। संस्कृतवाङ्मये पुराणानां महनीयता न केवलं विषयगतविशेषतयास्ति, अपितु तेषां विशालतापि एकं कारणमस्ति। पुराणानां मनोरञ्जिकाः सुरुचिपूर्णाः सरला उपादेयाः शिक्षाप्रदाश्च विविधाः कथाः बाल्यावस्थात एक हिन्दुसमाजे ललिताः प्रियतराः श्रव्याश्च भवन्ति, यतो हि जीवनस्य सर्वेषु क्षेत्रेषु उपस्थिनामावश्यकतानां 'सूक्ष्मेक्षिकया पुराणेषु विश्लेषणं कृतमस्ति। दया-दाक्षिण्य-सत्यता-वीरता-शूरता-धीरता-सुजनता-गंभीरता-पवित्रतादिलौकिकपारमार्थिक विषयाणां विशदं विवेचनं पुराणेषु कृतमस्ति येनोभयलोककल्याणकारी पन्थाः सुगमीभवति। पुराणोपदेशद्वारा नित्यं चलम् मानवो न केवलं सन्मानव एव भवितुमर्हति, अपितु शनैः शनैः राजर्षिः महर्षिः ब्रह्मर्षिरपि भवितुमर्हति। कौटुम्बिकजीवनस्य सर्वविधाः बाधा सरलतया समुत्तीर्य जीवो भगवतप्राप्ति कर्तुं प्रभवति पुराणानुसारम्। पुराणेषु साधारणे कुले जन्म गृहीत्वापि महतो महत्तम भवनस्यानेकानि उदाहरणानि निर्दिष्टानि सन्ति। अतो मानवजीवनस्य सर्वमुखसमुन्नतयेऽत्यन्तमुपयोगिनां पुराणानां पारायणं महता उत्साहेन कर्तव्यमित्येषोऽस्ति साधीयान् मार्गः।

●

## विभाति वेणुस्वनः

●

तदेव पृथिवीतलं प्रिय! तदेव वृन्दावनं
सलील-सलिला नदी तव च सैव सूर्यात्मजा।
तथाऽपि भव-तारणं सकल-संशयावारणं
किमत्र वद कारणं, नहि विभाति वेणुस्वनः॥

प्रभातमिश्रः

# दिवङ्गतः डॉ० मङ्गलदेवशास्त्री

श्रीगोपालशास्त्री दर्शनकेशरी

डॉ० मङ्गलदेवशास्त्रिणो जन्म धनाढ्यकुले बदायूंनगरे समजनि । एतेषां शिक्षा बाल्यकालीना तु गुरुकुले जाता । तत्रेमे पञ्चाम्बुविश्वविद्यालयीयशास्त्रिपरीक्षा-मुत्तेरुः । काङ्गड़ीविद्यालयतो विद्यामार्तण्ड-विद्यारत्न इत्युपाधिभृतोऽपि बभूवुः । तदनन्तरमिमे प्रतिभासम्पन्नतया लण्डननगरे तत्कालीमप्रथया उच्चशिक्षा ग्रहीतुं स्वपित्रा प्रेषिता अभूवन् । तत्र पाणिन्यष्टाध्यायीप्रभृतिविषय-प्रधानं शोधग्रन्थं विलिख्य एम० ए० डि० फिल् ( Oxon ) प्रभृतिविरुदावलिमासाद्य इह भारते प्रतिनिवृत्ताः स्वतन्त्रतया प्राच्यशिक्षणप्रचारकामनया श्रीशिवप्रसादगुप्तप्रतिष्ठापिते काशीविद्यापीठेऽध्यापनं प्राथमिकं प्रारभन्त ।

कियत् कालानन्तरं राजकीयसंस्कृतमहाविद्यालये प्रधानाचार्यपदे (प्रिन्सिपलपदे) प्रतिष्ठापिता भूत्वा बहुकालावधि तदाया चतुरस्रां सर्वदिङ्मुखीम् उन्नतिं चक्रुः । एतेषामेव काले डा० श्रीसम्पूर्णानन्दमहोदयानां शिक्षामन्त्रित्वसमये विश्वविद्यालयस्य प्रारूपविधिः प्रारब्धोऽभूत् । यत्रेमे प्रथमोपकुलपतिपदप्रतिष्ठिता आसन् ।

प्रतिवर्षं समुन्नतोपाधिप्रमाणपत्रवितरणमहोत्सव—(कन्भोकेशन) प्रथा प्रारब्धा । यो हि प्राक्तने भारते समावर्तनमहोत्सवोऽभिधीयते स्म । तत एवाविच्छिन्नेयं प्राचीनभारतीयशिक्षावसानसूचिका समावर्तनसंस्कारमर्य्यादा डा० मङ्गलदेवशास्त्रि-महोदयोपज्ञैव प्रचलिता विद्यते । पूर्वमिह महाविद्यालये न कदापि उपाधिवितरण-महोत्सवो भवति स्म । एवमेव प्रतिसम्बद्धमहाविद्यालयं परीक्षोत्तीर्णच्छात्राणामुपाधि-पत्राणि प्रमाण-पत्राणि च प्रहितानि भवन्ति स्म । डा० मङ्गलदेवशास्त्रिनिर्देश-प्रारब्धेयं समावर्तन-संस्कारमर्यादा इत्यपि विदाङ्कुर्वन्तु साम्प्रतिका अग्रेतनाश्च एतदीया अध्यापकाश्छात्राश्चेत्यलम् ।

संस्कृतशिक्षानुरागिणो डॉ० सम्पूर्णानन्दमहोदयाः स्वशिक्षामन्त्रित्वकाले

डॉ० भगवानदासमहोदयस्याध्यक्षत्वे सं. शिक्षाबोर्डनाम्ना संस्कृत-विशिष्टविदुषामेकां समितिं प्रतिष्ठापितवन्त आसन् । यत्र म० म० प्रमथनाथतर्कभूषण–म० म० चिन्नस्वामिप्रभृतयो महान्तो विद्वांसः सदस्या आसन् । तस्याः समितेः संयोजको डॉ० मङ्गलदेवशास्त्री एवासीत्तस्यां समितौ सदस्यतयाऽहं सांनिध्यातिशयतया सम्यगिमान् परीक्षितवान् । इमे संस्कृतवाङ्मयस्यान्तस्तलप्रविष्टा विशिष्टा विद्वांसः कर्मठा नियमोपस्थायिनो निष्पक्षपाताः कालातिपातेऽपि प्रारब्धकार्यसमाप्तौ एव विश्रामिण आसन् । तदानीमेव मया ज्ञातं यद्राजकीयसंस्कृतमहाविद्यालयोऽयं विश्वविद्यालयपदप्रतिष्ठितो यद्विद्यते तत्रास्य विद्वत्तल्लजस्य मङ्गलदेवशास्त्रिण एवाध्यवसायोऽविरतनिष्कामभावनया संस्कृतभारतीसेवानिष्णातैव हेतुरिति ।

इमे स्वनिन्दकान् स्वविरोधिनोऽपि योग्यान् विदुषः पुरस्कुर्वन्ति स्म । परीक्षकत्वनिर्वाचने परीक्षापाठ्य-ग्रन्थनिवेशने सर्वत्रैव तु उपसमितिर्भवत्येव । परन्तु एतेषां समक्षे तन्निर्वाचितविदुषां परीक्षकत्वस्वीकृतिः तन्निर्दिष्टग्रन्थानां सन्निवेशस्तु दुर्लभो दुष्प्रवेश एव भवति स्म, यावदिमे स्वयं तान् सर्वथा परीक्ष्य सन्तुष्टा न भवन्ति स्म । नियतसमये परीक्षाफलं निस्सरति स्म ।

तत्रैवैकदा सिद्धान्तकौमुदीविषये मम प्रस्तावोऽभूत् । यत् कथं सिद्धान्तकौमुदीयं मध्यमपरीक्षायां स्थास्यति गच्छतु इयं शास्त्रिपरीक्षायाम् । यतो हि भट्टोजीदीक्षितेन व्याकरणस्य सिद्धान्तग्रन्थोऽयमन्तिमो निर्मितोऽस्ति नहि मध्यमपरीक्षाकृते । सर्वेऽपि सदस्याः कृततूष्णीभोऽभूवन् । डा० मङ्गलदेवशास्त्री एव मे विरोधं कृत्वोक्तवान् । अहं प्रतिखण्डं पाणिनीयाष्टाध्याय्या अध्यायद्वयं सन्निवेश्य मध्यमापाठ्यं करोमि । अत्र भवतः किमुत्तरम् । इत्येवं तदानीं काले प्रत्युत्पन्नमतितया मे प्रस्तावं प्रत्याख्य परीक्षापाठ्यसंशोधनं कृतवान् । सिद्धान्तकौमुद्या सह प्रतिखण्डमष्टाध्याय्या अध्यायद्वयं कियत्कालावधि परीक्षायां पाठ्यमासीदेव ।

पश्चात्पुनस्तत्रैवावलम्बितो वेताल इति आभाणकानुसारम् अष्टाध्यायीरहितैव सिद्धान्तकौमुदी मध्यमपाठ्यप्रवृत्ताऽस्ति । याऽद्यापि प्रचलत्यपिच्छात्रक्षोभकरी इत्यलम् । किं किं वच्मि सम्प्रति स्वर्गं प्रस्थितानां विज्ञाननिधीनामेतेषां संस्कृतभाषोन्नयनेऽद्भुतोऽध्यवसाऽयोऽभूत् संस्कृतसाहित्यसम्मेलनस्य संस्कृति-